॥ श्रीः ॥

उत्तरमीमांसा

नाम

# वेदान्तदर्शनम् ।



श्रीमद्वेदव्यासप्रणीतम्

स्वामिगोविन्दानन्दोद्भावितया भाष्यरत्नप्रभया भासितेन

श्रीशङ्कराचार्यकृत-

## शारीरकनाम्ना भाष्येण संयुतम् ।

श्रीमदुदासीनपरमहंसपण्डित केशवानन्दस्वामिकृत-

टिप्पणीसमेतं च ।



एतच्च भारतीतीर्थकृताधिकरणमालासमन्वितम्

ऐनापुरे इत्युपाख्योद्धवाचार्येण च

शोधयित्वा

श्रीकृष्णदासात्मज-

गङ्गाविष्णु, खेमराजाभ्यां

मुम्बय्यां

श्रीवेङ्कटेश्वरमुद्रालयेऽङ्कितम् ।

संवत् १९४४ शके १८०९

## ॥ भूमिका ॥



इह खलु धर्मार्थकाममोक्षेषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमः पुरुषार्थः तस्य निखिलदुःखनिवृत्त्युपरक्तनिरतिशयानन्दरूपात्मात्मकतया नित्यत्वेनानावृत्तिरूपत्वात्। एवमेव हि श्रुतिस्मृतीहासपुराणयुक्त्यनुभवसिद्धम्। स च वेदान्तैकवेद्याशनायाद्यतीतापेतब्रह्मक्षत्रादिभेदासंसारिब्रह्मात्मैकत्वनिश्चयसाध्यः। स च निश्चयो देहेन्द्रियादिष्वहंममाभिनिवेशवशादनात्मधर्मान्कर्तृत्वभोक्तृत्वादीनात्मनि मन्यमानानां नानाविधकुतर्काकुलचेतसां दुःसाध्यः न तांस्तर्ककुशलश्रुत्यर्थविवेचकगुरुमनुप्रादायोपनिषदां सहस्राण्यपि यथाभूतमात्मतत्त्वं संबोधयितुमीशते अतस्तानुद्दिधीर्षुर्भगवान् वेदव्यासोऽद्वैतब्रह्मात्मकं श्रुत्यर्थं निर्णेतुमनेकन्यायोपबृंहिताध्यायचतुष्टयात्मिकामुत्तरमीमांसामारचयांचकार। साप्यतिसंक्षिप्तार्थकतया विना भाष्यं पुरुषायुषेणापि दुर्विज्ञेयेति विलोच्य परमकारुण्योपेतमानसो भगवान् स्वामिश्रीशंकराचार्यो भाष्यवलयालंकृतां तां चकार। तदपि गूढगम्भीरार्थकतयाऽनायासेन नार्थबोधकृदिति पर्यालोच्य सर्वान् नरानुपचिकीर्षुः स्वामिश्रीगोविन्दानन्दोनुकम्पया रत्नप्रभया भासयांचकार। सापि क्वचित् क्वचित् गुप्तार्थेति विलोच्य मया क्वचित् क्वचिट्टिपणैरलंकृता। यद्यपि व्यासनिर्मितेष्वेषु सूत्रेष्विदानीं नानाविधानि भाष्याण्युपलभ्यन्ते तथापि शाङ्करभाष्यस्यास्य निष्पक्षार्थप्रतिपादकतया प्रामाणिकैः प्रामाण्याङ्गीकारेण सर्वापेक्षयास्याभ्यर्हितत्वमिति सूपादेयमिदमाप्तैः। यद्यप्येतद्भाष्यं पूर्वं मुद्रितमभूत्तथापि यथावद्भाष्यकारसंप्रदायसिद्धसमग्रपाठकं न मुद्रितमितीदानीं गङ्गाविष्णुवणिक्प्रार्थनया मया भाष्यकारसम्प्रदायसिद्धपाठानुसारेण संशोधितम्। प्रार्थये चादौ विश्वेश्वरं मुद्रणकर्तुः श्रेष्ठिश्रीगङ्गाविष्णोः प्रयत्नं सफलीकर्तुम्। प्रसीदन्तु चानेन

प्रयत्नेन भगवद्भाष्यकारचरणा इति मुहुरभ्यर्थयेहं श्रीमदुदासीनपरमहंसपण्डितकेशवानन्दस्वामी ॥

उपरि तावत्केशवानन्दस्वामिना लिखितं यथायथं ज्ञेयमेव। परं च। कलिकातायां एशियाटिकसोसायटीनाम्न्या जनतया मुद्रितपुस्तके तृतीयाध्यायचतुर्थपादीया रत्नप्रभा न मिलितेति स पादो रत्नप्रभाभासितो न इति केषांचिदाभासः समजनि इति भाति। परं चास्मान् अमरकोशटीकाकारमहेश्वरपुस्तकालयतो लब्धशाङ्करभाष्ये मिलितेति स पादः पश्चात्तथैवाङ्कित्वा पुस्तकचरमभागे निवेशितो विद्यते पर्याप्तौ चाधिकरणज्ञानार्थं श्रीभारतीतीर्थविरचिताधिकरणमालापि संवेशिता इति। अत्र पुस्तकमुद्रणकाले मनुजनिष्ठनिसर्गभ्रमेणोर्वरितान्प्रमादांस्तावत्सहन्तामार्या इति प्रार्थितप्रायमेवेत्यशेषमतिमङ्गलम्।

ऐनापुरे इत्युपाख्यबाळाचार्या-
त्मज उद्धवाचार्यः।

# ब्रह्मसूत्रीयषोडशपादार्थदर्शनम्

## निर्घण्टपत्रम्।




| प्रतिपाद्यविषयाः। | अध्यायाङ्काः | पादाङ्काः |
|---|---|---|
| सुस्पष्टब्रह्मबोधकश्रुतिवाक्यानां समन्वयः, ... | १ | १ |
| उपास्यब्रह्मवाचकास्पष्टश्रुतिवाक्यानां समन्वयः, | १ | २ |
| ज्ञेयब्रह्मप्रतिपादकास्पष्टश्रुतिवाक्यानां समन्वयः, | १ | ३ |
| अव्यक्तादिसन्दिग्धपदमात्राणामेव समन्वयः, ... | १ | ४ |
| साङ्ख्ययोगकाणादादिस्मृतिभिः साङ्ख्यादिप्रयुक्ततर्कैश्च वेदान्तसमन्वयस्य विरोधपरिहारः, | २ | १ |
| साङ्ख्यादिमतानां दुष्टत्वप्रदर्शनम्, ... ... | २ | २ |
| पूर्वभागेण पञ्चमहाभूतश्रुतीनां उत्तरभागेण च जीवश्रुतीनां परस्परविरोधपरिहारः, ... | २ | ३ |
| लिङ्गशरीरश्रुतीनां विरोधपरिहारः, ... ... | २ | ४ |
| जीवस्य परलोकगमनागमनविचारपूर्वकवैराग्यनिरूपणम्, ... ... ... ... | ३ | १ |
| पूर्वभागेण त्वं-पदार्थस्य उत्तरभागेण तत्-पदार्थस्य च शोधनं, ... ... ... ... | ३ | २ |
| सगुणविद्यासु गुणोपसंहारस्य, निर्गुणे ब्रह्मणि अपुनरुक्तपदोपसंहारस्य च निरूपणम्, ... | ३ | ३ |
| निर्गुणज्ञानस्य बहिरङ्गसाधनभूतानां आश्रमयज्ञादीनां, अन्तरङ्गसाधनभूतानां च शमदमश्रवणमननादीनां निरूपणम्, ... ... ... | ३ | ४ |

| प्रतिपाद्यविषयाः । | अध्यायाङ्काः । | पादाङ्काः । |
|---|---|---|
| श्रवणाद्यावृत्त्या निर्गुणं, उपासनया सगुणं वा ब्रह्म साक्षात्कृतवतो जीवतः पुण्यपापलेपविनाशलक्षणाया मुक्तेरभिधानम् … … | ४ | १ |
| म्रियमाणस्य उत्क्रान्तिप्रकारदर्शनम्, … | ४ | २ |
| सगुणब्रह्मविदो मृतस्योत्तरमार्गाभिगमनम् … | ४ | ३ |
| पूर्वभागेण निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तेः, उत्तरभागेण च सगुणब्रह्मविदो ब्रह्मलोकस्थितेर्निरूपणम्, … … … | ४ | ४ |




# व्यासाधिकरणार्थदर्शनं निर्घण्टपत्रम्।



## समन्वयाख्यप्रथमाध्यायस्य प्रथमपादे।


| प्रतिपाद्यविषयाः। | सूत्राङ्काः। | अ०ङ्का। |
|---|---|---|
| ब्रह्मणो विचार्यत्वम्, ... ... ... | १ | १ |
| ब्रह्मणो लक्ष्यत्वं ... ... ... | २ | २ |
| ब्रह्मणो वेदकर्तृत्वं, १ वर्णकम्, ब्रह्मणो वेदैकमेयता, २ वर्णकं, ... | ३ | ३ |
| वेदान्तानां ब्रह्मबोधकत्वं, १ वर्णकं, वेदान्तानां ब्रह्मण्यवसितत्वं, २ वर्णकम्, ... | ४ | ४ |
| प्रधानस्य जगत्कर्तृत्वाभावकथनम्, ... | ५-११ | ५ |
| आनन्दमयकोषस्य परमात्मत्वं, १ वर्णकं, ब्रह्मण आनन्दमयजीवाधारत्वं, २ वर्णकं, ... | १२-१९ | ६ |
| आदित्यान्तर्गतहिरण्मयपुरुषस्येश्वरत्वम्, ... | २०-२१ | ७ |
| परब्रह्मण आकाशशब्दवाच्यत्वम्, ... | २२ | ८ |
| ब्रह्मण आकाशशब्दवत् प्राणशब्दवाच्यत्वं, ... | २३ | ९ |
| परब्रह्मणो ज्योतिःशब्दवाच्यत्वं, ... | २४-२७ | १० |
| ब्रह्मणः प्राणशब्दप्रतिपाद्यत्वं, ... | २८-३१ | ११ |


## उक्ताध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| ब्रह्मण उपास्यत्वम्, ... ... ... | १-८ | १ |
| ब्रह्मणो जगत्कर्तृत्वं, ... ... ... ... | ९-१० | २ |
| चेतनयोर्जीवेश्वरयोर्हृद्गुहागतत्वम्, ... ... | ११-१२ | ३ |
| छायाजीवान्यदेवान् हित्वा परब्रह्मण एवोपास्यत्वम्, ... ... ... ... | १३-१७ | ४ |

| प्रतिपाद्यविषयाः । | सू० | अधि० |
|---|---|---|
| प्रधानजीवेतरस्येश्वरस्यैवान्तर्यामिशब्दवाच्यत्वं, | १८-२० | ५ |
| प्रधानजीवौ निराकृत्येश्वरस्य भूतयोनित्वम्, ... | २१-२३ | ६ |
| ब्रह्मणो वैश्वानरशब्दवाच्यत्वम्, ... | २४-३२ | ७ |

## उक्ताध्यायस्य तृतीयपादे ।

| | | |
|---|---|---|
| सूत्रात्महिरण्यगर्भप्रधानभोक्तृजीवेश्वराणां मध्ये केवलमीश्वरस्यैव सर्वाधिष्ठानभूतत्वम्, ... | १-७ | १ |
| प्राणपरेशयोर्मध्ये परेशस्यैव सत्यशब्देन श्रेष्ठत्वम्, | ८-९ | २ |
| प्रणवब्रह्मणोर्मध्ये ब्रह्मण एवाक्षरशब्दवाच्यत्वम्, | १०-१२ | ३ |
| अपर-परब्रह्मणोर्मध्ये परब्रह्मण एव त्रिमात्रेण प्रणवेन ध्येयत्वम्, ... ... ... | १३ | ४ |
| दहराकाशत्वेन प्रतीयमानानां वियज्जीवब्रह्मणां मध्ये ब्रह्मण एव तदाकाशवाच्यत्वम्, ... | १४-१८ | ५ |
| अक्षिपुरुषत्वेनापाततः प्रतीयमानयोर्जीवपरेशयोः परेशस्यैव तत्पदवाच्यत्वम्, ... | १९-२१ | ६ |
| जगत्प्रकाशत्वेनोपलब्धयोः सूर्यादितेजःपदार्थचैतन्ययो-श्चैतन्यस्यैव तत्प्रकाशत्वम्, ... ... | २२-२३ | ७ |
| जीवात्मपरमात्मनोर्मध्ये परमात्मन एवाङ्गुष्ठमात्रपुरुष-शब्देन प्रतिपादनम्, ... ... | २४-२५ | ८ |
| देवानां निर्गुणविद्यायामधिकारनिरूपणम्, ... | २६-३३ | ९ |
| शूद्राणां वेदानधिकारकथनपूर्वकः शोकाकुलत्वेन शूद्रनाममात्रधारिणो जानश्रुतेर्वेदविद्याधिगमः, | ३४-३८ | १० |
| प्राणत्वेनाम्नातानां वज्रवायुपरेशानां मध्ये परेशस्यैव तादृशप्राणशब्दवाच्यत्वम्, ... | ३९ | ११ |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
| --- | --- | --- |
| ब्रह्मणः परत्वज्ज्योतिष्ट्वं, ... | ४० | १२ |
| ब्रह्मण आकाशशब्दवाच्यत्वं, ... | ४१ | १३ |
| ब्रह्मणो विज्ञानमयशब्दवाच्यत्वं, ... | ४२-४३ | १४ |


## उक्ताध्यायस्य चतुर्थपादे।


| | | |
| --- | --- | --- |
| कारणावस्थापन्नस्य स्थूलशरीरस्यैवाव्यक्तशब्दवाच्यत्वं, | १-७ | १ |
| श्रुतिप्रमितप्रकृति-स्मृतिसम्मतप्रधानयोर्मध्ये तादृशप्रकृतेरेवाजाशब्दवाच्यत्वम्, ... ... | ८-१० | २ |
| प्राणचक्षुःश्रोत्रमनोऽन्नानां पञ्चपञ्चजनशब्दवाच्यत्वं, | ११-१३ | ३ |
| ब्रह्मप्रतिपादकवेदान्तवाक्यसमन्वयानां युक्तियुक्तत्वं, | १४-१५ | ४ |
| प्राणजीवपरात्मनां मध्ये परात्मन एव कृत्स्नजगत्कर्तृत्वेन बालाकिना ब्रह्मत्वेनोक्तानां षोडशपुरुषाणां कर्तृत्वनिराकरणं, ... ... | १६-१८ | ५ |
| संशयितजीवपरमात्मनोर्मध्ये परमात्मन एव श्रवणमननादिविषयीकर्तृत्वम्, ... ... | १९-२२ | ६ |
| ब्रह्मणो निमित्तोपादानोभयकारणत्वं, ... | २३-२७ | ७ |
| परमाणुशून्यादीनां श्रुत्युक्तानामपि जगत्कारणत्वमपहाय ब्रह्मण एव प्रतिनियतजगत्कारणत्वं, | २८ | ८ |


इति प्रथमाध्यायः

# अविरोधाख्यद्वितीयोध्यायस्य प्रथमपादे।


| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| साङ्ख्यस्मृत्या वेदसङ्कोचस्यायुक्तत्वं, ... ... | १-२ | १ |
| योगस्मृत्याऽपि वेदसङ्कोचस्यायुक्तत्वं, ... ... | ३ | २ |
| वैलक्षण्याख्ययुक्तिद्वाराऽपि वेदान्तवाक्यानामबाध्यत्वं, | ४-११ | ३ |
| काणादबौद्धादीनां स्मृतियुक्तिभ्यामपि वेदवाक्यानामबाध्यत्वम्, ... ... ... ... | १२ | ४ |
| भोक्तृभोग्यभेदवतोऽपि परब्रह्मणोऽद्वैतत्वस्याबाधात्वं, | १३ | ५ |
| ब्रह्मणि भेदाभेदयोर्व्यावहारिकत्वमद्वितीयत्वस्य च तात्त्विकत्वम्, ... ... ... ... | १४-२० | ६ |
| सर्वज्ञत्वेन जीवसंसारमिथ्यात्वं च स्वनिर्लेपत्वं च पश्यतः परमेश्वरस्य न हिताहितभाग्दोषः, | २१-२३ | ७ |
| अद्वितीयस्यापि ब्रह्मणः क्रमेण नानाकार्याणां सृष्टिसम्भावना, ... ... ... | २४-२५ | ८ |
| ईश्वरस्योपादानरूपपरिणामिकारणत्वव्यवस्थापनं, | २६-२९ | ९ |
| ईश्वरस्याशरीरित्वेऽपि मायावित्वम्, ... | ३०-३१ | १० |
| नित्यतृप्तस्येश्वरस्यापि प्रयोजनं विनाऽशेषजगदुत्पादनं, | ३२-३३ | ११ |
| कर्मनियन्त्रितानां जीवानां सुखदुःखनिमित्तमात्रस्य जगत्संहरतश्च नैर्घृण्यदोषाभावः, ... | ३४-३६ | १२ |
| निर्गुणस्यापि ब्रह्मणो विवर्त्तरूपेण प्रकृतित्वसिद्धिः, | ३७ | १३ |


---

## उक्ताध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| साङ्ख्यानुमतप्रधानस्य जगद्धेतुत्वखण्डनं, ... | १-१० | १ |
| असदंशोद्भवे काणाददृष्टान्तस्यास्तित्वं, ... | ११ | २ |
| परमाणूनां संयोगेन जगदुत्पत्तेर्युक्तिविरूद्धत्वं, | १२-१७ | ३ |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| ईश्वराद्भिन्नानां बाह्यवस्त्वस्तित्ववादिबौद्धविशेषसम्मतानां परमाणूनां शब्दास्पर्शादीनाञ्च जगदुत्पादकत्वमतखण्डनं, ... ... | १८-२७ | ४ |
| विज्ञानवादिबौद्धसम्मतविज्ञानस्य जगत्कर्तृत्वादिखण्डनं, ... ... ... | २८-३२ | ५ |
| जीवादिसप्तपदार्थवादिनां बौद्धान्तराणां मतखडनं, | ३३-३६ | ६ |
| तटस्थेश्वरवादस्यायुक्तत्वं, ... ... ... | ३७-४१ | ७ |
| जीवोत्पत्त्यादेरयुक्तत्वं, ... ... ... | ४२-४५ | ८ |

## उक्ताध्यायस्य तृतीयपादे।

| | | |
|---|---|---|
| वेदान्तवादिमते आकाशस्यानित्यत्वकथनम्, ... | १-७ | १ |
| स्वरूपवतो ब्रह्मणो वायोरुत्पत्तिकथनम्, ... | ८ | २ |
| सद्रूपस्य ब्रह्मणोऽजन्यत्वं जगज्जनकत्वञ्च, ... | ९ | ३ |
| कार्यकारणयोरभेदेन वायुभूतस्य ब्रह्मणस्तेजःसृष्टिः, | १० | ४ |
| वेदोक्ततेजोरूपब्रह्मणो जलोत्पत्तिसिद्धिः, ... | ११ | ५ |
| छान्दोग्योपनिषदुक्तजलोत्पन्नान्नस्य पृथिव्यर्थकत्वं, | १२ | ६ |
| पूर्वपूर्वकार्योपाधिकाद्ब्रह्मण उत्तरोत्तरकार्योत्पत्तिसिद्धिः, ... ... ... | १३ | ७ |
| लयकाले पृथिव्यादीनां विपरीतक्रमकल्पनं ... | १४ | ८ |
| प्राणादीनां भूतेष्वन्तर्भावान्न तेषां सृष्टिक्रमभङ्गः, | १५ | ९ |
| वपुषो जन्ममरणयोर्मुख्यत्वेन जीवस्यैतयोर्भाक्तत्वं, | १६ | १० |
| जीवजन्मन औपाधिकत्वेन तस्य वस्तुतो नित्यत्वं, | १७ | ११ |
| जीवस्याचिद्रूपत्वखण्डनपूर्विका तच्चिद्रूपत्वसिद्धिः, | १८ | १२ |
| जीवस्याणुत्वखण्डनपूर्वकं तत्सर्वगत्वप्रतिपादनं, | १९-३२ | १३ |

| प्रतिपाद्यविषयाः । | सू० | अधि० |
|---|---|---|
| जीवस्याकर्तृत्वनिरसनपूर्वकं तत्कर्तृत्वप्रतिपादनं, | ३३-३९ | १४ |
| जीवकर्तृत्वस्याध्यस्तत्वेनावास्तविकत्वं, ... | ४० | १५ |
| जीवस्येश्वरप्रवृत्तत्वेन न रागप्रवृत्तत्वं, ... | ४१-४२ | १६ |
| औपाधिककल्पनैर्जीवेशयोर्जीवानाञ्च परस्परं व्यवहारव्यवस्था, ... ... | ४३-५३ | १७ |

## उक्ताध्यायस्य चतुर्थपादे ।

| | | |
|---|---|---|
| इन्द्रियाणामनादित्वनिराकरणपूर्वकं तेषामात्मसमुत्पन्नत्वम्, ... ... | १-४ | १ |
| इन्द्रियाणामेकादशसङ्ख्याकत्वस्य वेदान्तसम्मतत्वं, | ५-६ | २ |
| साङ्ख्यसम्मतेन्द्रियसर्वगत्वनिराकरणपूर्वकं तेषां परिच्छिन्नत्वकथनं, ... ... | ७ | ३ |
| प्राणस्यानादित्वखण्डनपूर्वकं तदुत्पत्तिसमाधानं, | ८ | ४ |
| प्राणवायोः स्वतन्त्रताकथनं, ... ... | ९-१२ | ५ |
| प्राणस्य समष्टिरूपेणाधिदैविकी विभुता आध्यात्मिकी तु तस्याल्पताऽदृश्यता चेन्द्रियवदिति, ... | १३ | ६ |
| इन्द्रियगणस्य देवताविशेषाधीनत्वकथनम, ... | १४-१६ | ७ |
| विलक्षणत्वेन प्राणादिन्द्रियाणां पृथक्त्वं, ... | १७-१९ | ८ |
| सर्वजगत्सर्जने जीवस्याशक्तत्वादीशस्यैव सर्वशक्तिमत्वात् तस्यैव तन्निर्मातृत्वं, ... ... | २०-२२ | ९ |

इति द्वितीयाध्यायः ॥

## साधनाख्यतृतीध्यायस्य प्रथमपादे ।

| | | |
|---|---|---|
| जीवस्य भाविशरीरबीजरूपसूक्ष्मभूतवेष्टितस्यैवेतो गमनम् | १-७ | १ |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| कर्मान्तरैः सानुशयस्य जीवस्य लोकान्तरारोहणम्, | ८-११ | २ |
| पापिनां याम्यलोकगमनम्, … … … | १२-२१ | ३ |
| अवरोहिणो जीवस्य वियदादिसमानत्वं, … | २२ | ४ |
| स्वर्गादवतरणकाले स्वर्ग-वृष्टि-पृथिवी-पुरुष-योषित्सु क्रमशो जनिष्यतो जीवस्य स्वर्गे वृष्टौ च जन्मनि त्वरा, तदितरेषु च जन्मनि विलम्ब इति … | २३ | ५ |
| सस्यादौ जीवस्य न मुख्यजन्म किन्तु संश्लेषमात्रमिति, | २४-२७ | ६ |


## उक्ताध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| स्वप्नदृष्टेर्मिथ्यात्वकथनम् … … … | १-६ | १ |
| सुषुप्तिस्थानरूपस्य हृत्स्थब्रह्मण एकत्वस्थापनम्, … | ७-८ | २ |
| स्वप्नावस्थितस्यैव जीवस्य तस्मात् समुद्बोधो नापरस्येति, | ९ | ३ |
| मूर्च्छाया जाग्रदाद्यवस्थान्तरभिन्नत्वं, … … | १० | ४ |
| ब्रह्मणो नीरूपभावस्य वेदान्तसम्मतत्वं, … | ११-२१ | ५ |
| ब्रह्मणो निषेधातीतत्वेन सत्यत्वस्थापनं, … | २२-३० | ६ |
| ब्रह्मणोऽन्यस्यावस्तुत्वव्यवस्थापनं, … … | ३१-३७ | ७ |
| कर्मफलोत्पत्तिं प्रति ईश्वरस्यैव कर्तृत्वं नापूर्वस्येति, | ३८-४१ | ८ |


## उक्ताध्यायस्य तृतीयपादे।


| | | |
|---|---|---|
| छान्दोग्यबृहदारण्यकश्रुत्युक्तयोः पञ्चाग्निविद्योपासनयोः विध्यनुष्ठानफलसाम्येनैकत्वं, … … | १-४ | १ |
| गुणोपसंहारस्य कर्तव्यत्वं, … … … | ५ | २ |
| छान्दोग्यकाण्वशाखयोरुद्गीथविद्याभेदकथनं, … | ६-८ | ३ |
| ब्रह्मदृष्टेर्हेतुत्वेनाक्षरोद्गीथयोरेकत्वसम्पादनं, … | ९ | ४ |

| प्रतिपाद्यविषयाः । | सू० | अधि० |
|---|---|---|
| वसिष्ठत्वादिगुणानामुपसंहर्तव्यत्वं, ... ... | १० | ५ |
| आनन्दसत्यत्वादीनां ब्रह्मगुणानां प्रतिपत्तिफलत्वेन सर्वशाखासु समानत्वात् व्यवस्थापकविध्यभावाच्च तेषामुपसंहर्तव्यत्वम् ... ... ... | ११-१३ | ६ |
| पुरुषज्ञानस्य संसारकारणात्, ज्ञाननिवर्तकत्वात् पुरुषस्यैव वेद्यत्वं, ... ... ... ... | १४-१५ | ७ |
| ईश्वरस्यैवात्मशब्दवाच्यत्वं न विराज इति, ... | १६-१७ | ८ |
| काण्वच्छान्दोग्यषष्ठयोर्द्वयोर्वस्त्वेकत्वम्, ... | १८ | ९ |
| प्राणोपासनं प्रति प्राणविद्याप्राप्तयोरनग्नताबुद्ध्याचमनयोः अनग्नताबुद्धेरेव विधेयत्वं, ... ... | १९ | १० |
| काण्वानामग्निरहस्यब्राह्मणबृहदारण्यकयोः पठितायाः शाण्डिल्यविद्याया एकविधात्वं, ... ... | २०-२२ | ११ |
| अहरित्यादित्यगतस्याहमित्यक्षिगतस्य च वेद्यपुरुषस्यैकत्वेऽपि स्थानविशेषे तन्नामविशेषस्य युक्तत्वं, | २३ | १२ |
| विद्यैकत्वाभावात् सम्भृत्यादीनां गुणानां शाण्डिल्यविद्यादिषु अनुपसंहार्यत्वम् ... ... | २४ | १३ |
| तैत्तिरीयकताण्डिनोः पुरुषविद्यायाः पृथक्त्वम् | २५ | १४ |
| वेदमन्त्रप्रवर्ग्यादीनां विद्यानङ्गत्वं, ... ... | २६ | १५ |
| अर्थवादत्वेन पापपुण्ययोरुपायनस्य हानावुपसंहर्तव्यत्वं, १ वर्णकं<br>पापपुण्यविधूननस्य हानार्थकत्वमेव न चालनार्थकत्वं, २ वर्णकं | २७-२८ | १६ |
| मरणात् प्राक् उपास्ये साक्षात्कृते सुकृतदुष्कृतक्षयः, ३ वर्णकं | | |
| उपासकस्यैवार्चिरादिमार्गो न ज्ञानिन इत्यस्य व्यवस्था, | २९-३० | १७ |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| सर्वासूपासनासु उत्तरमार्गविधानं, ... ... | ३१ | १८ |
| ब्रह्मतत्त्वज्ञानिनां मुक्तिर्नियता न तु पाक्षिकीत्यस्य प्रतिपादनम्,... ... ... ... ... | ३२ | १९ |
| आत्मस्वरूपलक्षकाणां निषेधानां परस्परोपसंहर्तव्यत्वम्, ... ... ... ... ... | ३३ | २० |
| ऋतं पिबन्ताविति द्वा सुपर्णाविति च मन्त्रयोर्वैधैकत्वम्, ... ... ... ... ... | ३४ | २१ |
| एकशाखास्थयोः उषस्तकहोलयोर्ब्राह्मणयोर्विद्यैक्यप्रतिपादनम्,... ... ... ... ... | ३५-३६ | २२ |
| उपासनार्थं पृथक्त्वेनोपास्यस्य द्वैधज्ञानम्, ... | ३७ | २३ |
| सत्यविद्याया एकत्वप्रतिपादनम्, ... ... | ३८ | २४ |
| दहराकाशहार्दाकाशयोरुपसंहर्तव्यत्वम्, ... | ३९ | २५ |
| उपासकस्य भोजने प्राणाहुतिलोपापत्तिः, ... | ४०-४१ | २६ |
| उद्गीथकर्माङ्गीभूतदेवतोपासनाया अनियतत्वम्, | ४२ | २७ |
| संवर्गविद्योक्ताधिदैववाय्वध्यात्मप्राणयोरनुचिन्तनस्य पृथक्त्वम्, ... ... ... ... | ४३ | २८ |
| मनश्चिदादीनां स्वतन्त्रविद्यात्वस्वीकारः, ... | ४४-५२ | २९ |
| भौतिकस्यात्मत्वनिराकरणपूर्वकतदन्यस्यात्मत्वप्रतिपादनम्, ... ... ... ... | ५३-५४ | ३० |
| ऐतरेयगतोक्थोपासनायां पृथिव्यादिदृष्टेः कौशीतक्यामपि समानत्वम्, ... ... ... | ५५-५६ | ३१ |
| विराड्रूपवैश्वानरस्य कृत्स्नस्यैव ध्यातव्यत्वं न तदंशस्येति | ५७ | ३२ |
| अनुष्ठातव्य-शाण्डिल्यदहरादिविद्यानां वेद्यब्रह्माभिन्नत्वेन भिन्नत्वं, ... ... ... ... | ५८ | ३३ |
| आत्मनः सगुणोपासनायां एकस्य द्वयोर्बहूनाञ्च उपास- | | |

प्रतिपाद्यविषयाः। सू० अधि०

नानां वैकल्पिकनियमकथनं, ... ... ५९ ३४

विकल्पेन समुच्चयेन वा प्रतीकोपासनाया ऐच्छिकत्वं, ६० ३५

विकल्पसमुच्चययोर्याथाकाम्यं, ... ...६१-६६ ३६

## उक्ताध्यायस्य चतुर्थपादे।

आत्मज्ञानस्य स्वतन्त्रत्वं न क्रत्वर्थत्वं, ...
ऊर्ध्वरेतोरूपाश्रमाणामस्तित्वव्यवस्थापनं, १ वर्णकं } १-१७ १

लोककामिनामाश्रमिणां ब्रह्मनिष्ठानर्हत्वं, २ वर्णकं १८-२० २

उद्गीथावयवस्योङ्कारस्य ध्येयत्वं, ... ... २१-२२ ३

औपनिषदाख्यानानां विद्यास्तावकत्वं, ... २३-२४ ४

आत्मबोधस्य कर्मानपेक्षत्वम्, ... ... २५ ५

विद्यायाः स्वोत्पत्तौ कर्मसापेक्षत्वम्, ... ... २६-२७ ६

आपदि सर्वान्नाभ्यनुज्ञानं ... ... ... २८-३१ ७

विद्यार्थानामाश्रमधर्माणाञ्च यज्ञादीनां सकृदनुष्ठानं, ३२-३५ ८

अनाश्रमिणो ज्ञानसम्भावनम्, ... ... ३६-३९ ९

आश्रमिणामवरोहाभावनिरूपणम्, ... ... ४० १०

भ्रष्टोर्ध्वरेतसः प्रायश्चित्तसद्भावः, ... ...४१-४२ ११

भ्रष्टोर्ध्वरेतसः प्रायश्चित्तस्य आमुष्मिकशुद्धिजनकत्वं
तादृशशुद्धिमतो व्यवहारानर्हत्वञ्च, ... ४३ १२

उपासनस्य ऋत्विक्कर्मत्वम्, ... ...४४-४६ १३

मौनस्य विधेयत्वम्, ... ... ... ...४७-४९ १४

बाल्यस्य भावशुद्धित्वं न वयःकामचारोभयत्वम्, ५० १५

इह वा जन्मान्तरे वा ज्ञानोत्पत्तिरिति ज्ञानोत्पत्तेः
पाक्षिकत्वम्, ... ... ... ... ५१ १६

| प्रतिपाद्यविषयाः । | सू० | अधि० |
|---|---|---|
| सालोक्यादिमुक्तीनां जन्यत्वेन सातिशयत्वं निर्वाणमुक्तेश्च निरतिशयत्वम्, ... ... ... | ५२ | १७ |


इति तृतीयाध्यायः

## फलाख्यचतुर्थाध्यायस्य प्रथमपादे ।


| | | |
|---|---|---|
| श्रवणादीनामावर्तनीयत्वम्, ... ... ... | १-२ | १ |
| ज्ञात्रां जीवेन स्वात्मतया ब्रह्मणो ग्राह्यत्वम् ... | ३ | २ |
| प्रतीकेऽहंदृष्टयभावः, ... ... ... | ४ | ३ |
| अब्रह्मणि प्रतीके ब्रह्मधियः कर्तव्यत्वम्, ... | ५ | ४ |
| कर्माङ्गेष्वादित्यादिदृष्टीनां कर्तव्यत्वम्, ... | ६ | ५ |
| उपासनायामासनस्य नियतत्वम्, ... | ७-१० | ६ |
| ध्यानसाधनस्यैकाग्र्यस्य प्रधानत्वेन दिग्देशकालानामनियमः, ... ... ... | ११ | ७ |
| उपास्तीनामामरणमावृत्तिः, ... | १२ | ८ |
| ज्ञानिनः पापलेपाभावः, ... ... ... | १३ | ९ |
| ज्ञानिनः पुण्यलेपाभावः, ... ... ... | १४ | १० |
| सञ्चितयोरिवारब्धयोः पुण्यपापयोर्ज्ञानोदयसमये विनाशाभावः, ... ... ... ... | १५ | ११ |
| अग्निहोत्रादिनित्यकर्मणो विद्योपयोग्यांशस्याविनाशः, | १६-१७ | १२ |
| सोपासनस्य निरुपासनस्य च नित्यकर्मणस्तारतम्येन विद्यासाधनत्वम्, ... ... ... ... | १८ | १३ |
| अधिकारिणां मुक्तिसद्भावः, ... ... ... | १९ | १४ |

| प्रतिपाद्यविषयाः । | सू० | अधि० |
|---|---|---|

## उक्ताध्यायस्य द्वितीयपादे ।

| | | |
|---|---|---|
| वागादीनां मनसि वृत्तिप्रविलयो न स्वरूपेण, . | १-२ | १ |
| मनसः प्राणे वृत्त्या प्रविलयः, ... ... . | ३ | २ |
| प्राणस्य जीवे लयान्तरं पुनर्भूतेषु लयः, ... . | ४-६ | ३ |
| ज्ञान्यज्ञानिनोरुत्क्रान्तेरपि साम्यम्, ... . | ७ | ४ |
| तेजःप्रभृतीनां परमात्मनि वृत्त्या लयः, ... . | ८-११ | ५ |
| देहादेव प्राणोत्क्रान्तेर्निषेधः, ... ... . | १२-१४ | ६ |
| तत्त्वज्ञानिनो वागादीनां परमात्मनि लयः, . | १५ | ७ |
| तत्त्वविदो वागादीनां निःशेषेण परमात्मनि लयः | १६ | ८ |
| उपासकस्योत्क्रान्तेर्विशेषवत्त्वम्, ... .. | १७ | ९ |
| निशायामपि मृतानां रश्मिप्राप्तिः, ... .. | १८-१९ | १० |
| दक्षिणायनमृतस्योपासकस्य ज्ञानफलप्राप्तिः, ... | २०-२१ | ११ |

---

## उक्ताध्यायस्य तृतीयपादे ।

| | | |
|---|---|---|
| अर्चिरादिकस्य ब्रह्मलोकमार्गस्यैकत्वम्, ... | १ | १ |
| संवत्सरादित्ययोर्मध्ये देवलोकवायुलोकौ सन्निवेशयितव्यौ, ... ... ... ... | २ | २ |
| वरुणादीनां सन्निवेशादर्चिरादिमार्गस्य व्यवस्थापितत्वं, | ३ | ३ |
| अर्चिरादीनामातिवाहिकत्वम्, ... ... ... | ४-६ | ४ |
| उत्तरमार्गेण कार्यब्रह्मगमनम्, ... ... ... | ७-१४ | ५ |
| प्रतीकोपासकानां ब्रह्मलोकाऽप्रापणं, ... | १५-१६ | ६ |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| **उक्ताध्यायस्य चतुर्थपादे।** | | |
| मुक्तिरूपस्य वस्तुनः पुरातनत्वम्, ... ... ... | १-३ | १ |
| मुक्तस्य ब्रह्मणोऽभिन्नत्वम्, ... ... ... | ४ | २ |
| मुक्तस्वरूपभूतस्य ब्रह्मणो युगपत् सविशेषत्वनिर्विशेषत्वे, ... ... ... ... ... ... | ५-७ | ३ |
| अर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तस्योपासकस्य भोग्यवस्तूनां सृष्टौ मानससङ्कल्पस्यैव हेतुत्वं, ... | ८-९ | ४ |
| एकस्यापि पुरुषस्य देहभावाभावयोरैच्छिकत्वम्, | १०-१४ | ५ |
| सर्वेषां देहानां सात्मकत्वम्, ... ... ... | १५-१६ | ६ |
| ब्रह्मलोकगतानामुपासकानां जगत्सृष्टौ स्वातन्त्र्याभावेऽपि भोगमोक्षयोस्तेषां स्वातन्त्र्यसिद्धिः, | १७-२२ | ७ |

इति चतुर्थध्यायः

॥ श्रीः ॥

# ॥ ॐ नमो गणेशाय ॥

यमिह कारुणिकं शरणं गतोप्यरिसहोदर आप महत् पदम्
तमहमाशु हरिं परमाश्रये जनकजाङ्कमनन्तसुखाकृतिम् ॥ १ ॥
श्रीगौर्या सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदम्
प्रौढं विघ्नवनं हरन्तमनघं श्रीढुण्ढितुण्डासिना ।
वन्दे चर्मकपालिकोपकरणैर्वैराग्यसौख्यात् परम्-
नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवम् ॥ २ ॥
यत्कृपालवमात्रेण मूको भवति पण्डितः ।
वेदशास्त्रशरीरान्तां वाणीं वीणाकरां भजे ॥ ३ ॥
कामाक्षीदत्तदुग्धप्रचुरसुरनुतप्राज्यभोज्याधिपूज्य-
श्रीगौरीनायकाभित्प्रकटनशिवरामार्यलब्धात्मबोधैः
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभासांस्मितास्य-
श्रीमद्गोविन्दवाणीचरणकमलगो निर्वृतोऽहं यथालिः ॥ ४ ॥
श्रीशङ्करं भाष्यकृतं प्रणम्य व्यासं हरिं सूत्रकृतं च वच्मि ।
श्रीभाष्यतीर्थे परहंसतुष्ट्यै वाग्जालबन्धच्छिदमभ्युपायम् ॥ ५ ॥
विस्तृतग्रन्थवीक्षायामलसं यस्य मानसम् ।
व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाभिधा ॥ ६ ॥
श्रीमच्छारीरकं भाष्यं प्राप्य वाक् शुद्धिमाप्नुयात् ।
इति श्रमो मे सफलो गङ्गां रथ्योदकं यथा ॥ ७ ॥

---

१ मोक्षपुर्यां श्रीकांच्यां श्रीकामाक्ष्या दत्तं पायसं देवैरपि स्तुतं प्राज्यं सम्पूर्णं प्रकृष्टाज्य युक्तं वा यद्भोज्यमन्नं तेनाधिपूज्याः श्रीशिवरामयोगिनः किञ्च शिवश्चासौ रामश्चेति स्वनाम्ना श्रीगौरीनायकयोरभेदं प्रकटयंति तेभ्यो गुरुभ्यो लब्धात्मबोधा यैः श्रीमद्गोपाल सरस्वतीभिस्तैरित्यर्थः । २ अत्र भाष्ये कठिनवाग्रूपेण जालेन यो बंधः जालवद्धपक्षिणामिव परमहंसानां क्लेशकरस्तन्नाशकमभीष्टमुपायं वच्मीत्यर्थः ।

यज्ज्ञानसमुद्भूतमिन्द्रजालमिदं जगत्

सत्यज्ञानसुखानन्तं तदहं ब्रह्म निर्भयम् ॥ ८ ॥

इह खलु "स्वाध्यायोऽध्येतव्य" इति नित्याध्ययनविधिनाऽधीतसाङ्गस्वाध्याये "तद्विजिज्ञासस्व" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इति श्रवणविधिरुपलभ्यते। तस्यार्थः, अमृतत्वकामेनाद्वैतात्मविचार एव वेदान्तवाक्यैः कर्तव्य इति। तेन काम्येन नियमविधिनाऽर्थादेव भिन्नात्मशास्त्रप्रवृत्तिः वैदिकानां पुराणादिप्राधान्यं वा निरस्यत इति वस्तुगतिः। तत्र कश्चिदिह जन्मनि जन्मान्तरे वाऽनुष्ठितयज्ञादिभिर्नितान्तं निर्मलस्वान्तोऽस्य श्रवणविधेः को विषयः? किं फलं? कोऽधिकारी? कः सम्बन्धः? इति जिज्ञासते। तं जिज्ञासुमुपलभमानो भगवान् बादरायणस्तदनुबन्धचतुष्टयं श्रवणात्मकशास्त्रारम्भप्रयोजकं न्यायेन निर्णेतुमिदं सूत्रं रचयाञ्चकार **"अथातो ब्रह्मजिज्ञासा"** इति।

नन्वनुबन्धजातं विधिसन्निहितार्थवादवाक्यैरेव ज्ञातुं शक्यम्। तथाहि। "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लो-

नेत्यमिति न्यायवत्यां

त्यादिश्रुत्या च भूमात्मा नित्यस्ततोऽन्यदनित्यमिति विवेको लभ्यते। कर्मणा कृष्यादिना चितः सम्पादितः सस्यादिर्लोको भोग्य इत्यर्थः। विपश्चित् नित्यज्ञानस्वरूपः। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" "आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यादिश्रुत्या अनात्ममात्रे वैराग्यं लभ्यते। परीक्ष्यानित्यत्वेन निश्चित्य। अकृतो मोक्षः कृतेन कर्मणा नास्तीति। कर्मतत्फलेभ्यो वै-

१अत्रविधौ कालविशेषानुपादानान्नित्येत्यर्थसिद्धम्। २अधिकारिणीनिर्देशः। ३भिन्नात्मप्रतिपादकशास्त्रप्रवृत्तिरित्यर्थः, अन्वयस्तु अस्य पदस्य निरस्यते इत्यनेन साकम्। क० पा०—आत्मशास्त्रप्रवृत्तिः।

राग्यं प्राप्तवानित्यर्थः। "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति श्रुत्या शमादिषट्कं लभ्यते। "समाहितो भूत्वा" इति काण्वपाठः। उपरतिः संन्यासः। "न स पुनरावर्तत" इति स्वयं ज्योतिरानन्दात्मकमोक्षस्य नित्यत्वश्रुत्या मुमुक्षा लभ्यते। तथा च विवेकादिविशेषणवानधिकारीति ज्ञातुं शक्यम्। यथा "एता रात्रीरुपयन्ति" इति रात्रिसत्रविधौ प्रतितिष्ठन्तीत्यर्थवादस्थप्रतिष्ठाकामस्तद्वत्। तथा "श्रोतव्य" इत्यत्र प्रत्ययार्थस्य नियोगस्य प्रकृत्यर्थो विचारो विषयः। विचारस्य वेदान्ता विषय इति शक्यं ज्ञातुम्। "आत्मा द्रष्टव्य" इत्यद्वैतात्मदर्शनमुद्दिश्य "श्रोतव्य" इति विचारविधानात्। न हि विचारः साक्षाद्दर्शनहेतुः अप्रमाणत्वात् अपि तु प्रमाणविषयत्वेन। प्रमाणं चाद्वैतात्मनि वेदान्ता एव। "तं त्वौपनिषदं पुरुषं" "वेदान्तविज्ञानसुनिश्चितार्था" इति श्रुतेः। वेदान्तानां च प्रत्यग्ब्रह्मैक्यं विषयः "तत्त्वमसि" "अहं ब्रह्मास्मि" इति श्रुतेः। एवं विचारविधेः फलमपि ज्ञानद्वारा मुक्तिः "तरति शोकमात्मवित्" "ब्रह्मविद् ब्रह्मैव भवति" इत्यादि श्रुतेः। तथा सम्बन्धोऽप्यधिकारिणो विचारस्य कर्त्तव्यतारूपः फलस्य प्राप्यतारूप इति यथायोगं सुबोधः। तस्मादिदं सूत्रं व्यर्थमिति चेत् न, तासामधिकार्यादिश्रुतीनां स्वार्थे तात्पर्यनिर्णायकन्यायसूत्राभावे किं विवेकादिविशेषणवानधिकारी उतान्यः? किं वेदान्ताः पूर्वतन्त्रेण गतार्था अगतार्था वा? किं ब्रह्म प्रत्यगभिन्नं न वा? किं मुक्तिः स्वर्गादिवत् लोकान्तरम् आत्मस्वरूपा वेति संशयानिवृत्तेः। तस्मादागमवाक्यैरापाततः प्रतिपन्नाधिकार्यादिनिर्णयार्थमिदं सूत्रमावश्यकम्। तदुक्तं प्रकाशात्मश्री-

---

१ अधिकारीतिपदं पूर्ववाक्यादिहाकृष्यताम्। नचैतद्विधौ विश्वजिन्न्यायेन स्वर्ग एव कुतो न फलं कल्प्यते इति वाच्यम्, अनुपस्थितस्वर्गफलकल्पने तस्य च प्रकृतसत्रसंबंधकल्पने गौरवादर्थवादोपस्थितस्यैव प्रस्तुतसत्रफलत्वकल्पनौचित्यात्, तदुक्तं, "फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्" इति जै०।

चरणैः । "अधिकार्यादीनामागमिकत्वेऽपि न्यायेन निर्णयार्थमिदं सूत्रम्" इति । येषां मते श्रवणे विधिर्नास्ति तेषामविहितश्रवणेऽधिकार्यादि-निर्णयानपेक्षणात् सूत्रं व्यर्थमित्यापतति इत्यलं प्रसङ्गेन ।

तथा चास्य सूत्रस्य श्रवणविध्यपेक्षिताधिकार्यादिश्रुतिभिः स्वार्थनिर्णयार्थोत्थापितत्वात् हेतुहेतुमद्भावश्रुतिसङ्गतिः । शास्त्रारम्भहेत्वनुबन्धनिर्णायकत्वेनोपोद्घातत्वाच्छास्त्रादौ सङ्गतिः । अधिकार्यादिश्रुतीनां स्वार्थे समन्वयोक्तेः समन्वयाध्यायसङ्गतिः । "ऐतदात्म्यमिदं सर्वम् तत् सत्यम् स आत्मा तत्त्वमसि" इत्यादिश्रुतीनां सर्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां विषयादौ समन्वयोक्तेः पादसङ्गतिः । एवं सर्वसूत्राणां श्रुत्यर्थनिर्णायकत्वात् श्रुतिसङ्गतिः । तत्तदध्याये तत्तत्पादे च समानप्रमेयत्वेन सङ्गतिरूहनीया । प्रमेयं च कृत्स्नशास्त्रस्य ब्रह्म, अध्यायानां तु समन्वयाविरोधसाधनफलानि । तत्र प्रथमपादस्य स्पष्टब्रह्मलिङ्गानां समन्वयः प्रमेयः । द्वितीयतृतीययोरस्पष्टब्रह्मलिङ्गानां । चतुर्थपादस्य पदमात्रसमन्वय इति भेदः । अस्याधिकरणस्य प्राथम्यान्नाधिकरणसङ्गतिरपेक्षिता ।

अथाधिकरणमारच्यते । "श्रोतव्य" इति विहितश्रवणात्मकं वेदान्तमीमांसाशास्त्रं विषयः । तत् किमारब्धव्यं न वेति विषयप्रयोजनसम्भवासम्भवाभ्यां संशयः । तत्र "नाहं ब्रह्म" इति भेदग्राहिप्रत्यक्षेण कर्तृत्वाकर्तृत्वादिविरुद्धधर्म्मवत्त्वलिङ्गकानुमानेन च विरोधेन ब्रह्मात्मनोरैक्यस्य विषयस्यासम्भवात्, सत्यबन्धस्य ज्ञानान्निवृत्तिरूपफलासम्भवान्नारम्भणीयमिति प्राप्ते, सिद्धान्तः "अथातो ब्रह्मजिज्ञा-

१ प्रकृतार्थसिद्ध्यनुकूलचिन्ताविषयत्वं तत्त्वम्, तथा चाहुः, "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इति । २ यथाक्रमं प्रमेयाणीति शेषः । ३ कं० पा० आरभ्यते । अधिकरणलक्षणं तु "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः । सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्" इति । ४ सहार्थयोगे तृतीयेयम् । ५ अयमत्रानुमानप्रयोगः जीवब्रह्मणी मिथो भिन्ने विरुद्धधर्मवत्त्वात्तेजस्तिमिरवदिति ।

सा" इति । अत्र श्रवणविधिसमानार्थत्वाय "कर्तव्या" इति पदमध्याहर्तव्यम् । अध्याहृतं च भाष्यकृता "ब्रह्मजिज्ञासा कर्तव्या" इति । तत्र प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वानन्वयात् प्रकृत्या फलीभूतं ज्ञानमजहल्लक्षणयोच्यते । प्रत्ययेनेच्छासाध्यो विचारो जहल्लक्षणया । तथा च "ब्रह्मज्ञानाय विचारः कर्तव्य" इति सूत्रस्य श्रौतार्थः सम्पद्यते । तत्र ज्ञानस्य स्वतः फलत्वायोगात् प्रमातृत्वकर्तृत्वभोक्तृत्वात्मकानर्थनिवर्तकत्वेनैव फलत्वं वक्तव्यम् । तत्रानर्थस्य सत्यत्वे ज्ञानमात्रान्निवृत्त्ययोगादध्यस्तत्वं वक्तव्यमिति बन्धस्याध्यस्तत्वमर्थात् सूचितम् । तच्च शास्त्रस्य विषयप्रयोजनवत्त्वसिद्धिहेतुः । तथा हि, शास्त्रमारब्धव्यं विषयप्रयोजनवत्त्वाद् भोजनादिवत् । शास्त्रं प्रयोजनवद् बन्धनिवर्तकज्ञानहेतुत्वात् रज्जुरियम् इत्यादिवाक्यवत् । बन्धो ज्ञाननिवर्त्योऽध्यस्तत्वात् रज्जुसर्पवत्, इति प्रयोजनसिद्धिः । एवमर्थाद् ब्रह्मज्ञानाज्जीवगतानर्थभ्रमनिवृत्तिं फलं सूत्रयन् जीवब्रह्मणोरैक्यं विषयमप्यर्थात् सूचयति । अन्यज्ञानादन्यत्र भ्रमानिवृत्तेः । जीवो ब्रह्माभिन्नः तज्ज्ञाननिवर्त्याध्यासाश्रयत्वात्, यदित्थं तत्तथा यथा शुक्त्यभिन्न इदमंश इति । विषयसिद्धिहेतुरध्यास इत्येवं विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति । अत्र पूर्वपक्षे बन्धस्य सत्यत्वेन ज्ञानादनिवृत्तेरुपायान्तरसाध्या मुक्तिरिति फलम् । सिद्धान्ते ज्ञानादेव मुक्तिरिति विवेकः । इति सर्वं मनसि निधाय ब्रह्मसूत्राणि व्याख्यातुकामो भगवान् भाष्यकारः सूत्रेण विचारकर्त्तव्यतारूपश्रौतार्थान्यथानुपपत्त्याऽर्थात् सूत्रितं विषयप्रयोजनवत्त्वमुपोद्घातत्वात् तत्सिद्धिहेत्वध्यासमाक्षेपसमाधानभाष्याभ्यां प्रथमं वर्णयति "युष्मदस्मत्प्रत्ययगोचरयोः" इति । एतेन सूत्रार्थास्पर्शित्वादध्यासग्रन्थो न भाष्यमिति निरस्तम् आर्थिकार्थस्पर्शित्वात् ।

१ विषयस्य अध्यस्तत्वम् । २ यो यज्ज्ञाननिवर्त्याध्यासाश्रयः स तदभिन्न इति स्पष्टोऽर्थः । ३ वक्ष्यमाणहेतुना ।

# नमो भगवते वासुदेवाय॥

## "युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोरित-

यत्तु मङ्गलाचरणाभावादव्याख्येयमिदं भाष्यमिति, तन्न, "सुतरामितरेतरभावानुपपत्तिः" इत्यन्तभाष्यरचनार्थं तदर्थस्य सर्वोपद्रवरहितस्य विज्ञानघनप्रत्यगर्थस्य तत्त्वस्य स्मृतत्वात्। अतो निर्दोषत्वादिदं भाष्यं व्याख्येयम्।

लोके शुक्ताविदं रजतमिति भ्रमः सत्यरजते इदं रजतमित्यधिष्ठानसामान्यारोप्यविशेषयोरैक्यप्रमाहितसंस्कारजन्यो दृष्ट इति। अत्राप्यात्मन्यनात्माहङ्काराध्यासे पूर्वप्रमा वाच्या, सा चात्मानात्मनोर्वास्तवैक्यमपेक्षते, न हि तदस्ति। तथा हि, आत्मानात्मानावैक्यशून्यौ परस्परैक्यायोग्यत्वात् तमःप्रकाशवदिति मत्वा हेतुभूतं विरोधं वस्तुतः प्रतीतितो व्यवहारतश्च साधयति॥ युष्मदस्मत्प्रत्ययगोचरयोरिति॥ न च "प्रत्ययोत्तरपदयोश्च" [७।२।९८] इति सूत्रेण "प्रत्यये चोत्तरपदे च परतो युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशौ स्तः" इति विधानात् "त्वदीयं मदीयं त्वत्पुत्रो मत्पुत्र" इतिवत् "त्वन्मत्प्रत्ययगोचरयोः" इति स्यादिति वाच्यं, "त्वमावेकवचने" [७।२।९७] इत्येकवचनाधिकारात्, अत्र च युष्मदस्मत्पदयोरेकार्थवाचित्वाभावादनात्मनां युष्मदर्थानां बहुत्वादस्मदर्थचैतन्यस्याप्युपाधितो बहुत्वात्॥

नन्वेवं सति कथमत्र भाष्ये विग्रहः? न च "यूयमिति प्रत्ययो युष्मत्प्रत्ययः वयमिति प्रत्ययोऽस्मत्प्रत्ययस्तद्गोचरयोरिति विग्रह" इति वाच्यं, शब्दसाधुत्वेऽप्यर्थासाधुत्वात्। न ह्यहङ्काराद्यनात्मनो यूयमिति

१ आत्मानात्मनोर्वास्तवैक्यम्। २ युष्मदस्मत्प्रत्ययगोचरयोरितिभाष्ये ३ क० पा० युष्मदस्मदोरेकार्थवाचित्वाभाव।

मः प्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुप-

प्रत्ययविषयत्वमस्तीति चेत्, न, गोचरपदस्य योग्यतापरत्वात् । चिदात्मा तावदस्मत्प्रत्यययोग्यः, तत्प्रयुक्तसंशयादिनिवृत्तिफलभाक्त्वात्, "न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्" इति भाष्योक्तेश्च । यद्यप्यहङ्कारादिरपि तद्योग्यस्तथापि चिदात्मनः सकाशादत्यन्तभेदसिद्ध्यर्थं युष्मत्प्रत्यययोग्य इत्युच्यते ।

आश्रमश्रीचरणास्तु टीकायोजनायामेवमाहुः । "सम्बोध्यचेतनो युष्मत्पदवाच्यः, अहङ्कारादिविशिष्टचेतनोऽस्मत्पदवाच्यः, तथा च 'युष्मदस्मदोः स्वार्थे प्रयुज्यमानयोरेव त्वमादेशानियमो, न लाक्षणिकयोः' "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ" [ ८ । १ । २० ] इति सूत्रासाङ्गत्यप्रसङ्गात् 'अत्र शब्दलक्षकयोरिव' चिन्मात्रजडमात्रलक्षकयोरपि न त्वमादेशो लक्षकत्वाविशेषाद्" इति । यदि तयोः शब्दबोधकत्वे सत्येव त्वमादेशाभाव इत्यनेन सूत्रेण ज्ञापितं, तदाऽस्मिन् भाष्ये युष्मत्पदेन युष्मच्छब्दजन्यप्रत्यययोग्यः परागर्थो लक्ष्यते अस्मत्पदेन अस्मच्छब्दजन्यप्रत्यययोग्यः प्रत्यगात्मा । तथा च लक्ष्यतावच्छेदकतया शब्दोऽपि बोध्यत इति न त्वमादेशः । न च पराक्त्वप्रत्यक्त्वयोरेव लक्ष्यतावच्छेदकत्वं, न शब्दयोग्यत्वांशस्य गौरवादिति वाच्यं, पराक्प्रतीचोर्विरोधस्फुरणार्थं विरुद्धशब्दयोग्यत्वस्यापि वक्तव्यत्वात् । अत एवेदमस्मत्प्रत्ययगोचरयोरिति वक्तव्येऽपीदंशब्दोऽस्मदर्थे लोके वेदे च बहुशः "इमे वयमास्महे" "इमे विदेहाः" "अयमहमस्मि" इति च प्रयोगदर्शनात्, नास्मच्छब्दविरोधीति मत्वा युष्मच्छदः प्रयुक्तः, इदंशब्दप्रयोगे विरोधास्फूर्तेः । एतेन चेतनवाचित्वा-

---

१ अयमात्मा एकान्तेन नियमेनाविषयो न । २ युस्मदस्मदोः षष्ठीत्यादिसूत्रे । ३ समनियतलघुधर्मस्यावच्छेदकत्वे संभवति गुरोर्धर्मस्य तदभाव इति सिद्धान्तः । ४ वक्ष्यमाणहेतुद्वयेन ।

**पत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतर**

दस्मच्छब्दः पूर्वं प्रयोक्तव्यः" अभ्यर्हितं पूर्वमितिन्यायात्" "त्यदादीनि सर्वैर्नित्यम्" [ १।२।७२ ] इति सूत्रेण विहित एकशेषश्च स्यादिति निरस्तम् "युष्मदस्मदोरिति" सूत्र इवात्रापि पूर्वनिपातैकशेषयोरप्राप्तेः, एकशेषे विवक्षितविरोधास्फूर्तेश्च । वृद्धास्तु "युष्मदर्थादेनात्मनो निष्कृष्य शुद्धस्य चिद्धातो[1]रध्यारोपापवादन्यायेन[2] ग्रहणं द्योतयितुमादौ युष्मद्ग्रहणम्" इत्याहुः । तत्र 'युष्मदस्मत्पदाभ्यां पराक्प्रत्यक्त्वेनात्मानात्मनोर्वस्तुतो विरोध उक्तः ॥

प्रत्ययपदेन प्रतीतितो विरोध उक्तः ।-प्रतीयत इति प्रत्ययो ऽहङ्कारादिरनात्मा दृश्यतया भाति, आत्मा तु प्रतीतित्वात् प्रत्ययः स्वप्रकाशतया भाति । गोचरपदेन व्यवहारतो विरोध उक्तः ।-युष्मदर्थः प्रत्यगात्मतिरस्कारेण कर्ताहमित्यादि[3] व्यवहारगोचरः, अस्मदर्थ[4]स्त्वनात्मप्रविलापेन "अहं ब्रह्मेति" व्यवहारगोचर इति त्रिधा विरोधः स्फुटीकृतः । युष्मच्चास्मच्च युष्मदस्मदी, ते एव प्रत्ययौ च तौ गोचरौ चेति युष्मदस्मत्प्रत्ययगोचरौ तयोस्त्रिधा विरुद्धस्वभावयोरितरेतरभावो ऽत्यन्ताभेदस्तादात्म्यं वा तदनुपपत्तौ सिद्धायामित्यन्वयः । ऐक्यासम्भवेऽपि शुक्लो घट इतिवत्तादात्म्यं किं न स्यादित्यत आह ॥ वि[5]षयविषयिणोरिति ॥ चिज्जडयोर्विषयविषयित्वाद्दीपघटयोरिव न तादात्म्यमिति भावः । युष्मदस्मदी पराक्प्रत्यग्वस्तुनी, ते एव प्रत्ययश्च गोचरश्चेति वा विग्रहः । अत्र प्रत्ययगोचरपदाभ्यां आत्मानात्मनोः प्रत्यक्पराग्भावे चिदचित्त्वं हेतुरुक्तः, तत्र हेतुमाह विषयविषयिणोरिति । अनात्मनो ग्राह्यत्वादचित्त्वं आत्मनस्तु ग्राहकत्वाच्चित्वं वाच्यम् । अचित्त्वे स्वस्य स्वेन ग्रहस्य कर्मकर्तृत्वविरोधेनासम्भवादप्रत्यक्षत्वा-

१ चैतन्यस्य धारकस्य सर्वाधिष्ठानस्येति यावत् । २ अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपंच्यते इति न्यायस्वरूपम् । ३ अहंकारः । ४ चिदात्मा । ५ चिदचित्त्वे ।

# भावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयि-

पत्तेरित्यर्थः। यथेष्टं वा हेतुहेतुमद्भावः। नन्वेवमात्मानात्मनोः पराक्प्रत्यक्त्वेन चिदचित्त्वेन ग्राह्यग्राहकत्वेन च विरोधात् तमःप्रकाशवदैक्यस्य तादात्म्यस्य चानुपपत्तौ सत्यां तत्प्रमित्यभावेनाध्यासाभावेऽपि तद्धर्माणां चैतन्यसुखजाड्यदुःखादीनां विनिमयेनाध्यासोऽस्त्वित्यत आह ॥ तद्धर्माणामपीति ॥ तयोरात्मानात्मनोर्धर्मास्तद्धर्मास्तेषामपि इतरेतरभावानुपपत्तिः। इतरत्र धर्म्यन्तरे इतरेषां धर्माणां भावः संसर्गस्तस्यानुपपत्तिरित्यर्थः। न हि धर्मिणोः संसर्गं विना धर्माणां विनिमयोऽस्ति। स्फटिके लोहितवस्तुसान्निध्यात् लौहित्यधर्मसंसर्गः। असंगात्मधर्मिणः केनाऽप्यसंसर्गाद्धर्मिसंसर्गपूर्वको धर्मसंसर्गः कुतस्त्य इत्यभिप्रेत्योक्तम्॥ सुतरामिति ॥ नन्वात्मानात्मनोस्तादात्म्यस्य तद्धर्मसंसर्गस्य चाभावेऽप्यध्यासः किं न स्यादित्यत आह ॥ इत्यत इति ॥ इत्युक्तरीत्या तादात्म्याद्यभावेन तत्प्रमाया अभावादतः प्रमाजन्यसंस्कारस्याध्यासहेतोरभावादध्यासो मिथ्येति भवितुं युक्तमित्यन्वयः। मिथ्याशब्दो द्व्यर्थः अपह्नववचनः अनिर्वचनीयतावचनश्चेति। अत्र चापह्नवार्थः। कुत्र कस्याध्यासोऽपह्नूयते इत्याशङ्क्य 'आत्मन्यनात्मतद्धर्माणाम् अनात्मन्यात्मतद्धर्माणामध्यासो निरस्यते' इत्याह ॥ अस्मत्प्रत्ययगोचर इत्यादिना ॥ अहमितिप्रत्यययोग्यत्वं बुद्ध्यादेरप्यस्तीति मत्वा तत आत्मानं विवेचयति ॥ विषयिणीति ॥ बुद्ध्यादिसाक्षिणीत्यर्थः। साक्षित्वे हेतुः ॥ चिदात्मक इति ॥ अहमिति भासमाने चिदंशात्मनीत्यर्थः ॥ युष्मत्प्रत्ययगोचरस्येति ॥ त्वंकारयोग्यस्य इदमर्थस्येति

१ विषयविषयित्वे चिदचित्त्वं हेतुः, चिदचित्त्वे प्रत्यक्पराग्भावो हेतुः। यद्वा विषयविषयित्वे पराक्प्रत्यग्भावो हेतुः, प्रत्यक्पराग्भावे चिदचित्त्वं हेतुः। अथवा प्रत्यक्पराग्भावे चिदचित्त्वं हेतुः, चिदचित्त्वे विषयविषयिभावो हेतुः। इतिरीत्या यथेष्टम्।
२ धर्माणां विनिमयो नाम स्वधर्म्यतिरिक्ते भानम्। ३ चकारोऽत्राध्याहर्तव्यः।

**णिं चिदात्मके 'युष्मत्प्रत्ययगोचरस्य विषयस्य'**

यावत् ॥ नन्वहमिति भासमानबुद्ध्यादेः कथमिदमर्थत्वमित्यत आह **विषयस्येति** ॥ साक्षिभास्यस्येत्यर्थः। साक्षिभास्यत्वरूपलक्षणयोगाद् बुद्ध्यादेर्घटादिवदिदमर्थत्वं न प्रतिभासत इति भावः। अथ वा यदात्मनो मुख्यं सर्वान्तरत्वरूपं प्रत्यक्त्वं प्रतीतित्वं ब्रह्मास्मीति व्यवहारगोचरत्वं चोक्तं तदसिद्धम्, अहमिति प्रतीयमानत्वात् अहङ्कारवदित्याशङ्क्याह॥ **अस्मत्प्रत्ययगोचर** इति ॥ अस्मच्चासौ प्रत्ययश्चासौ गोचरश्च तस्मिन्नित्यर्थः। अहंवृत्तिव्यङ्ग्यस्फुरणत्वं स्फुरणविषयत्वं वा हेतुः। आद्ये, दृष्टान्ते हेत्वसिद्धिः। द्वितीये तु, पक्षे तदसिद्धिरित्यात्मनो मुख्यं प्रत्यक्त्वादि युक्तमिति भावः। ननु यदात्मनो विषयित्वं तदसिद्धम् "अनुभवामि" इति शब्दवत्त्वाद् अहङ्कारवदित्यत आह ॥ **विषयिणीति** ॥ वाच्यत्वं लक्ष्यत्वं वा हेतुः। नाद्यः पक्षे तदसिद्धेः। नान्त्यः, दृष्टान्ते तदैकल्यादिति भावः। "देहं जानामि" इति देहाहङ्कारयोर्विषयविषयित्वेऽपि मनुष्योऽहमित्यभेदाध्यासवदात्माहङ्कारयोरप्यध्यासः स्यादित्यत आह ॥ **चिदात्मक** इति ॥ तयोर्जाड्याल्पत्वाभ्यां सादृश्यादध्यासेऽपि चिदात्मन्यनवच्छिन्ने जडाल्पाहङ्कारादेर्नाध्यास इति भावः। "अहम्" इति भास्यत्वादात्मवदहङ्कारस्यापि प्रत्यक्त्वादिकं मुख्यमेव, ततः पूर्वोक्तपराक्त्वाद्यसिद्धिरित्याशङ्क्याह ॥ **युष्मदिति** ॥ अहंवृत्तिभास्यत्वमहङ्कारे नास्ति कर्तृकर्मत्वविरोधात्, चिद्भास्यत्वं चिदात्मनि नास्ति इति हेत्वसिद्धिः। अतो बुद्ध्यादेः प्रतिभासतः प्रत्यक्त्वेऽपि पराक्त्वादिकं मुख्यमेवेति भावः। युष्मत् पराक् तच्चासौ प्रतीयत इति प्रत्ययश्चासौ कर्तृत्वादिव्यवहारगोचरश्च तस्येति विग्रहः। तस्य हेयत्वार्थमाह ॥ **विषयस्येति** ॥ वि-

१ का०पा०:–रप्यभेदाध्यासः २ अहंवृत्तिभास्यत्वं हेतुः, अहंवृत्त्यभिव्यक्तचिद्भास्यत्वं वा हेतुस्तत्रेति शेषः। ३ युष्मत्प्रत्ययगोचरस्य।

**तद्धर्माणां चाध्यासः । तद्विपर्ययेण विषयिण-**

ञ् बन्धने । विसिनोति बध्नाति इति विषयस्तस्येत्यर्थः । आत्मन्य-नात्मतद्धर्माध्यासो मिथ्या भवतु, अनात्मन्यात्मतद्धर्माध्यासः किं न स्यात्? "अहं स्फुरामि, सुखी" इत्याद्यनुभवादित्याशङ्क्याह ॥ **तद्विपर्ययेणेति** ॥ तस्मादनात्मनो विपर्ययो विरुद्धस्वभावश्चैतन्यं, इत्थम्भावे तृतीया । चैतन्यात्मना विषयिणस्तद्धर्माणां च योऽहङ्कारादौ विषयेऽध्यासः स मिथ्येति नास्तीति भवितुं युक्तम्, अध्याससामग्र्यभावात्। न ह्यत्र पूर्वप्रमाहितसंस्कारः सादृश्यमज्ञानं वाऽस्ति । निरवयवनिर्गुणस्वप्रकाशात्मनि गुणावयवसादृश्यस्य चाज्ञानस्य चायोगात् ।

नन्वात्मनो निर्गुणत्वे तद्धर्माणामिति भाष्यं कथमिति चेद्, उच्यते । बुद्धिवृत्त्यभिव्यक्तं चैतन्यं ज्ञानं विषयाभेदेनाभिव्यक्तं स्फुरणम्, शुभकर्मजन्यवृत्तिव्यक्तमानन्द इत्येवं वृत्त्युपाधिकृतभेदात् ज्ञानादीनामात्मधर्मत्वव्यपदेशः । तदुक्तं टीकायाम्, "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इति । अतो निर्गुणब्रह्मात्मत्वमते "अहङ्करोमि" इति प्रतीतेरर्थस्य चाध्यासत्वायोगात् प्रमात्वम्, "अहं नर इति सामानाधिकरण्यस्य गौणत्वमिति" मतमास्थेयम् । तथा च बन्धस्य सत्यतया ज्ञानान्निवृत्तिरूपफलासम्भवाद् बद्धमुक्तयोर्जीवब्रह्मणोरैक्यायोगेन विषयासम्भवात् शास्त्रं नारम्भणीयमिति पूर्वपक्षभाष्यतात्पर्य्यम् । युक्तग्रहणात् पूर्वपक्षस्य दुर्बलत्वं सूचयति । तथा हि, किमध्यासस्य नास्तित्वमयुक्तत्वाद्, अभानाद्वा, कारणाभावाद्वा? आद्य इष्ट इत्याह ॥ **तथापीति** ॥ एतदनुरोधादादौ यद्यपीति

---

१ पूर्वप्रमाजन्यसंस्कारसादृश्यादिरूपाध्याससामग्र्यभावात् ।

स्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम् । तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामे-

पठितव्यम् । अध्यासस्यासङ्गस्वप्रकाशात्मन्ययुक्तत्वमलङ्कार इति भावः । न द्वितीय इत्याह ॥ अयमिति ॥ "अज्ञः कर्ता मनुष्योऽहम्" इति प्रत्यक्षानुभवादध्यासस्याभानमसिद्धमित्यर्थः । न चेदं प्रत्यक्षं कर्तृत्वादौ प्रमेति वाच्यम्, अपौरुषेयतया निर्दोषेणोपक्रमादि-लिङ्गावधृततात्पर्येण च "तत्त्वमसि" इत्यादिवाक्येनाकर्तृत्वब्रह्मत्व-बोधनेनास्य भ्रमत्वनिश्चयात् । न च ज्येष्ठप्रत्यक्षविरोधादागमज्ञानस्यैव बाध इति वाच्यम् देहात्मवादप्रसङ्गात् । "मनुष्योऽहम्" इति प्रत्यक्षविरोधेन "अथायमशरीरः" इत्यादिश्रुत्या देहान्यात्मासिद्धेः । "तस्मादिदं रजतम्" इतिवत् सामानाधिकरण्यप्रत्यक्षस्य भ्रमत्वशङ्काकलङ्कितस्य नागमात् प्राबल्यमित्यास्थेयम् । किञ्च ज्येष्ठत्वं पूर्वभावित्वं वा? आगमज्ञानं प्रत्यपजीव्यत्वं वा? । आद्ये न प्राबल्यं । ज्येष्ठस्यापि रजतभ्रमस्य पश्चाद्भाविना शुक्तिज्ञानेन बाधदर्शनात् । न द्वितीयः । आगमज्ञानोत्पत्तौ प्रत्यक्षादिमूलवृद्धव्यवहारे च संग्रहहारा शब्दोपलब्धिद्वारा च प्रत्यक्षादेर्व्यावहारिकप्रामाण्यस्योपजीव्यत्वेऽपि तात्त्विकप्रामाण्यस्यानपेक्षितत्वादनपेक्षितांशस्यागमेन बाधसंभवादिति ।

यत्तु क्षणिकयागस्य श्रुतिबलात् कालान्तरभाविफलहेतुत्ववत् "तथा विद्वान्नामरूपाद्विमुक्तः", इति श्रुतिबलात् सत्यस्यापि ज्ञानान्निवृत्तिसम्भवादध्यासवर्णनं व्यर्थमिति तन्न ज्ञानमात्रनिवर्त्यस्य क्वापि

१ "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्तीच लिंगं तात्पर्यनिर्णये" इतिश्लोकोक्ताः षडुपक्रमादयः । २ निश्चित । ३ अज्ञः कर्ता मनुष्योऽहमित्यादिरूपस्य । ४ उपजीव्यते कार्यायाश्रीयते इत्युपजीव्यं कारणं तस्य भावः तत्त्वम् । ५ बंधस्येतिशेषः ।

# न्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तवि-

सत्यत्वादर्शनात्, सत्यस्य चात्मनो निवृत्त्यदर्शनाच्च, अयोग्यतानिश्चये सति सत्यबन्धस्य ज्ञानान्निवृत्तिश्रुतेर्बोधकत्वायोगात्[1] । न च सेतुदर्शनात् सत्यस्य पापस्य नाशदर्शनान्नायोग्यतानिश्चय इति वाच्यम् । तस्य श्रद्धानियमादिसापेक्षज्ञाननाश्यत्वात्, बन्धस्य च "नान्यः पन्थाः" इति श्रुत्या ज्ञानमात्रान्निवृत्तिप्रतीतेः । अतः श्रुतज्ञाननिवर्त्यत्वनिर्वाहार्थमध्यस्तत्वं वर्णनीयम् । किञ्च ज्ञानैकनिवर्त्यस्य किं नाम सत्यत्वम्? न तावदज्ञानाजन्यत्वम् । "मायां तु प्रकृतिम्" इति श्रुतिविरोधात्[2] मायाविद्ययोरैक्यात् । नापि स्वाधिष्ठाने स्वाभावशून्यत्वम् । "अस्थूलम्" इत्यादि निषेधश्रुतिविरोधात् । नापि ब्रह्मवद्बाधायोग्यत्वं, ज्ञानान्निवृत्तिश्रुतिविरोधात् । अथ व्यवहारकाले बाधशून्यत्वम्, तर्हि व्यावहारिकमेव सत्यत्वमित्यागतमध्यस्तत्वम्[3] । तच्च श्रुत्यर्थे योग्यताज्ञानार्थं वर्णनीयमेव यागस्यापूर्वद्वारत्ववत् । न च तदनन्यत्वाधिकरणे तस्य वर्णनात् पौनरुक्त्यम् । तत्रोक्ताध्यासस्यैव प्रवृत्त्यङ्गविषयादिसिद्ध्यर्थमादौ स्मार्यमाणत्वादिति दिक् । अध्यासं द्वेधा दर्शयति ॥ लोकव्यवहार इति ॥ लोक्यते मनुष्योऽहमित्यभिमन्यत इति लोकोऽर्थाध्यासः तद्विषयो व्यवहारोऽभिमान इति ज्ञानाध्यासो दर्शितः । द्विविधाध्यासस्वरूपलक्षणमाह ॥ अन्योन्यस्मिन्नित्यादिना धर्मधर्मिणोरित्यन्तेन ॥ जाड्यचैतन्यादिधर्माणां धर्मिणावहङ्कारात्मानौ तयोरत्यन्तं भिन्नयोरितरेतरभेदाग्रहेणान्योन्यस्मिन्, अन्योन्यतादात्म्यमन्योन्यधर्मांश्च व्यत्यासेनाध्यस्य लोकव्यवहार इति योजना । अतः[4] "सोऽयम्" इति प्रमाया नाध्यास-

---

[1] [illegible]मभिप्रायः यदि बन्धे सत्यत्वस्वीकारस्ते मते तदातूपनिषदां सहस्रैरपि बन्धनिवृत्तिर्न शक्यते बोधयितुं, बंधो न निवृत्तिप्रतियोगी सत्यत्वात्, आत्मवत्, इत्यनुमानेन तस्य निवृत्त्यभावबोधनादिति । २ मायाभासेन जीवेशौ करोति मायाचाविद्या च स्वयमेव भवतीतिश्रुतेस्तयोरैक्यमवसेयम् । ३ बन्धाध्यस्तत्वस्य । ४ अत्यन्तपदोपादानात् ।

त्वं तदिदमर्थयोः कालभेदेन कल्पितभेदेऽपि अत्यन्तभेदाभावात्, इ-
ति वक्तुमत्यन्तेत्युक्तम् । न च धर्मितादात्म्याध्यासे धर्माध्यासस्सिद्धेः
"धर्मांश्चेति" व्यर्थमिति वाच्यम् अन्धत्वादीनामिन्द्रियधर्माणां ध-
र्म्यध्यासास्फुटत्वेऽप्यन्धोऽहमिति स्फुटोऽध्यास इति ज्ञापनार्थत्वात्।
नन्वात्मानात्मनोः परस्पराध्यस्तत्वे शून्यवादः स्यादित्याशङ्क्याह ॥
॥ सत्यानृते मिथुनीकृत्येति ॥ सत्यमनिदं चैतन्यं, तस्यानात्मनि
संसर्गमात्राध्यासो न स्वरूपस्य । अनृतं युष्मदर्थः तस्य स्वरूपतोऽ-
प्यध्यासात् तयोर्मिथुनीकरणमध्यास इति न शून्यतेत्यर्थः ।
[redacted]नीकरणलोकव्यवहारशब्दानामेकार्थत्वेऽध्यस्य, मि-
थुनीकृत्येति पूर्वकालत्ववाचि "क्त्वा" प्रत्ययादेशस्य ल्यपः कथं
प्रयोग इति चेन्न, अध्यासव्यक्तिभेदात् । तत्र पूर्वपूर्वाध्यासस्योत्त-
रोत्तराध्यासं प्रति संस्कारद्वारा पूर्वकालत्वेन हेतुत्वद्योतनार्थं ल्यपः
प्रयोगः । तदेव स्पष्टयति ॥ नैसर्गिक इति ॥ प्रत्यगात्मनि हेतुहेतुमद्भा-
वेनाध्यासप्रवाहोऽनादिरित्यर्थः ॥ ननु प्रवाहस्यावस्तुत्वादध्यासव्य-
क्तीनां सादित्वात् कथमनादित्वमिति चेद्, उच्यते । अध्यासत्वावच्छि-
न्नव्यक्तीनां मध्येऽन्यतमया व्यक्त्या विनाऽनादिकालस्य अवर्तनं का-
र्यानादित्वमिति, [redacted]वादिति कल्पो निर-
स्तः संस्कारस्य निमित्तस्य नैसर्गिकपदेनोक्तत्वात् । न च पूर्वप्रमाज-
न्य एव संस्कारो हेतुरिति वाच्यम्, लाघवेन पूर्वानुभवजन्यसंस्कार-
स्य हेतुत्वात् । अतः पूर्वाध्यासजन्यसंस्कारोऽस्तीति सिद्धम् । अ-
ध्यासस्योपादानमाह ॥ मिथ्याज्ञाननिमित्त इति ॥ मिथ्या च तदे-
ज्ञानं च मिथ्याज्ञानं तन्निमित्तमुपादानं यस्य स तन्निमित्तस्तदुपादान इ-
त्यर्थः । अज्ञानस्योपादानत्वेऽपि संस्फुरदात्मतत्त्वावरकतया दोषत्वे-
नाहङ्काराध्यासकर्तुरीश्वरस्योपाधित्वेन संस्कारकालकर्मादिनिमित्तपरि-

१ का० पा० विकल्पौ ।

**विक्रियोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गि-**

णामित्वेन च निमित्तत्वमिति द्योतयितुं निमित्तपदम्। स्वप्रकाशात्मन्यसङ्गे कथमविद्यासङ्ग इति शङ्कानिरासार्थं मिथ्यापदम्। प्रचण्डमार्तण्डमण्डले पेचकानुभवसिद्धान्धकारवत्[१] "अहमज्ञ" इत्यनुभवसिद्धमज्ञानं दुरपह्नवं कल्पितस्याधिष्ठानास्पर्शित्वात् नित्यस्वरूपज्ञानस्याविरोधित्वाच्चेति। यद्वा अज्ञानं ज्ञानाभाव इति शङ्कानिरासार्थं मिथ्यापदम्। मिथ्यात्वे सति [illegible]र्त्यत्वमज्ञानस्य लक्षणं मिथ्याज्ञानपदेनोक्तम्। ज्ञानेनेच्छाप्रागभावः साक्षान्निवर्त्यत इति वदन्तं[२] प्रति मिथ्यात्वे सतीत्युक्तम्। अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्यबन्धेऽतिव्याप्तिनिरासाय साक्षादिति। अनाद्युपादानत्वे सति मिथ्यात्वं वा लक्षणम्। ब्रह्म[illegible]मृदादिनिरासार्थमनादीति। अविद्यात्मनोः सम्बन्धनिरासार्थमुपादानत्वे सतीति। संप्रति अध्यासं द्रढयितुमभिलपति॥ अहमिदं ममेदमिति॥ आध्यात्मिककार्याध्यासेष्वहमिति प्रथमोऽध्यासः। न चाधिष्ठानारोप्यांश[illegible]पलम्भात् नायमध्यास इति वा[illegible]म्, "अयो दहति[illegible] इतिवत् "अहमुपलभे" इति [illegible] संघात उ[illegible]। "अत्रअहमिदम्" इत्यनेन "मनुष्योऽहम्" इति तादात्म्याध्यासो दर्शितः[३]। "ममेदं शरीरम्" इति संसर्गाध्यासः।

ननु देहात्मनोस्तादात्म्यमेव संसर्ग इति तयोः को भेद इति चेत्, सत्यम्, सत्त्वैक्ये सति [illegible]स्तादात्म्यम्। तत्र "मनुष्योऽहम्"

१ दिवान्धस्योलूकस्य। २ प्रतियोगिप्रागभावनिवृत्तिः प्रतियोगिस्वरूपान्नातिरिच्यते इति चिरंतनतार्किकं प्रति। तन्मते इच्छाप्रागभावनिवृत्तेरिच्छास्वरूपानतिरिक्ततया इच्छाया ज्ञानसाध्यत्वांगीकारादेव इच्छाप्रागभावनिवृत्तेरपि ज्ञानसाध्यत्वसंभवादिति बोध्यम्। ३ दर्शित इति पूर्वोक्तमत्रानुवर्त्य चकारं चाध्याहृत्य संसर्गाध्यासश्च दर्शित इति योज्यम्।

**कोऽयं लोकव्यवहारः ॥ आह कोऽयमध्यासो नामेति? उच्यते। स्मृतिरूपः परत्र पूर्वदृष्टाव-**

इत्यैक्यांशभानं "ममेदमिति" भेदांशरूपसंसर्गभानमिति भेदः । एवं-सामग्रीसत्त्वादनुभवसत्त्वादध्यासोऽस्तीत्यतो ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनयोः सत्त्वात् शास्त्रमारम्भणीयमिति सिद्धान्तभाष्यतात्पर्यम् । एवं च सूत्रेणार्थात् सूचिते[1] विषयप्रयोजने प्रतिपाद्य तद्धेतुमध्यासं लक्षणसम्भावनाप्रमाणैः साधयितुं लक्षणं पृच्छति ॥ **आहेति** ॥ किंलक्षणकोऽध्यास इत्याह पूर्ववादीत्यर्थः । अस्य शास्त्रस्य तत्त्वनिर्णयप्रधानत्वेन वादकथात्वद्योतनार्थं आहेति परोक्तिः । "आहेत्यादि" "कथं पुनः प्रत्यगात्मनीत्यतः" प्रागध्यासलक्षणपरं भाष्यं तदारभ्य संभावनापरम्, "तमेतमविद्याख्यम्" इत्यारभ्य "सर्वलोकप्रत्यक्ष" इत्यन्तं प्रमाणपरमिति विभागः । लक्षणमाह ॥ **उच्यते स्मृतिरूप** इति ॥ अध्यास इत्यनुषङ्गः । अत्र परत्रावभास इत्येव लक्षणम् । शिष्टं[2] पदद्वयं तदुपपादनार्थम् । तथाहि, अवभास्यत इत्यवभासो रजताद्यर्थः तस्यायोग्यमधिकरणं परत्रपदार्थः । अधिकरणस्यायोग्यत्वमारोप्यात्यन्ताभाववत्त्वं तद्वत्त्वं वा[3] तथा चैकावच्छेदेन स्वसं[4]सृज्यमाने स्वात्यन्ताभाववति अवभास्यत्व[illegible]त्वमित्यर्थः । [illegible]ञ्च साद्यनाद्यध्याससाधारणं लक्षणम् । संयो[illegible]तिव्याप्तिनिरासाय एकावच्छेदेनेति । संयोगस्य स्वसंसृज्यमाने वृक्षे स्वात्यन्ताभाववत्यवभास्यत्वेऽपि स्वस्वात्यन्ताभावयोर्मूलाग्रावच्छेदकभेदान्नातिव्याप्तिः । पूर्वं स्वाभाववति भूतले पश्चादानीतो घटो भातीति घटेऽतिव्याप्तिनिरासाय स्वसंसृज्यमाने इति पदम् । तेनाविभा[illegible]ले प्रतियोगिसंसर्गस्य विद्यमानतोच्यते इति नातिव्याप्तिः । भूत्वावच्छेदेनावभास्यगन्धेऽतिव्या-

१ का० पा० सूत्रिते । २ अवशिष्टमित्यर्थः । ३ अभावस्याधिकरणानतिरिक्तत्वमते आद्यम्, अतिरिक्तत्वमते द्वितीयम् । ४ स्वसंसर्गवतीत्यर्थः । ५ पृथिवीत्वावच्छेदेनेत्यर्थः ।

प्तिवारणाय स्वात्यन्ताभाववतीति पदम् । शुक्तीदन्त्वावच्छेदेन रजत-
संसर्गकालेऽत्यन्ताभावोऽस्तीति नाव्याप्तिः । नन्वस्य लक्षणस्यासम्भवः
शुक्तौ रजतस्य सामग्र्यभावेन संसर्गासत्त्वात् । न च स्मर्यमाणसत्यर-
जतस्यैव परत्र शुक्तावभास्यत्वेनाध्यस्तत्वोक्तिरिति वाच्यम्; अन्य-
थाख्यातिप्रसङ्गादित्यत आह ॥ **स्मृतिरूप इति** ॥ स्मर्यते इति
स्मृतिः सत्यरजतादिः तस्य रूपमिव रूपमस्येति स्मृतिरूपः स्मर्य-
माणसदृश इत्यर्थः । सादृश्योक्त्या स्मर्यमाणादारोप्यस्य भेदान्नान्य-
थाख्यातिरित्युक्तं भवति । सादृश्यमुपपादयति ॥ **पूर्वदृष्टेति** ॥ दृष्टं
दर्शनं संस्कारद्वारा पूर्वदर्शनादवभास्यत इति पूर्वदृष्टावभासः । तेन
संस्कारजन्यज्ञानविषयत्वं स्मर्यमाणारोप्ययोः सादृश्यमुक्तं भवति,
स्मृत्यारोपयोः संस्कारजन्यत्वात् । न च संस्कारजन्यत्वादारोपस्य स्मृ-
तित्वापत्तिरिति वाच्यम्, दोषसंप्रयोगजन्यत्वस्यापि विवक्षितत्वेन[1]
संस्कारमात्रजन्यत्वाभावात् । अत्र संप्रयोगशब्देन अधिष्ठानसामान्य-
ज्ञानमुच्यते । अहङ्काराध्यासे इन्द्रियसंप्रयोगाभावात् । एवं च दोष-
संप्रयोगसंस्कारबलाच्छुक्त्यादौ रजतमुत्पन्नमस्तीति परत्र परावभा-
स्यत्वलक्षणमुपपन्नमिति स्मृतिरूपपूर्वदृष्टपदाभ्यामुपपादितम् । अ-
न्ये तु "ताभ्यां दोषादित्रय[2]जन्यत्वं कार्याध्यासलक्षणमुक्तम्" इत्याहुः ।
अपरे तु "स्मृतिरूपः स्मर्यमाणसदृशः, सादृश्यं च प्रमाणाजन्यज्ञा-
नविषयत्वं, स्मृत्यारोपयोः प्रमाणाजन्यत्वात् पूर्वदृष्टपदं तज्जातीयप-
रम्, अभिनवरजतादेः पूर्वदृष्टत्वाभावात्; तथा च प्रमाणाजन्यज्ञान-
विषयत्वे सति पूर्वदृष्टजातीयत्वं प्रातीतिकाध्यासलक्षणं ताभ्यामुक्तम्;
परत्रावभासशब्दाभ्यामध्यासमात्रलक्षणं व्याख्यातमेव, तत्र स्मर्य-
माणगङ्गादावभिनवघटे चातिव्याप्तिनिरासाय प्रमाणेत्यादिपदद्वयम्"
इत्याहुः । तत्रार्थाध्यासे स्मर्यमाणसदृशः परत्र पूर्वदर्शनादवभास्यत

१ अध्यासलक्षणे इति बोध्यम् । २ दोषसंप्रयोगसंस्कारा दोषादयस्त्रयः ।

जातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते "इदं सर्वमसृजत यदिदं किं च" इति न च कारणं सद्ब्रह्म स्वविकारस्यानन्दमयस्य मुख्यया वृत्त्याऽवयव उपपद्यते । अपराण्यपि सूत्राणि यथासम्भवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्याणि ॥ १९ ॥

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

इदमाम्नायते "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते- हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्या-

स्थानस्थत्वात् भृगुवल्लीस्थानन्दवदित्याशङ्क्याह । "**कामाच्च नानुमानापेक्षा**" काम्यत इति काम आनन्दः तस्य भृगुवल्ल्यां पञ्चमस्य ब्रह्मत्वदृष्टेरानन्दमयस्यापि ब्रह्मत्वानुमानापेक्षा न कार्या, विकारार्थकमयड्विरोधादित्यर्थः । भेदव्यपदेशश्चेत् सगुणं ब्रह्मात्र वेद्यं स्यादित्याशङ्क्याह । "**अस्मिन्नस्य च तद्योगं शास्ति**" । गुहानिहितत्वेन प्रतीचि स एक इत्युपसंहृते पुच्छवाक्योक्ते ब्रह्मण्यहमेव परं ब्रह्मेति प्रबोधवत् आनन्दमयस्य यदा ह्येति शास्त्रे ब्रह्मभावं शास्ति, अतो निर्गुणब्रह्मैक्यज्ञानार्थं जीवभेदानुवाद इत्यभिप्रेत्याह ॥ **अपराण्यपीति** ॥ अन्तस्तद्धर्मोपदेशात् । छान्दोग्यवाक्यमुदाहरति ॥ **अथ य इति** ॥ अथेत्युपास्तिप्रारम्भार्थः । हिरण्मयो ज्योतिर्विकारः, पुरुषः पूर्णोऽपि मूर्त्तिमानुपासकैर्दृश्यते । मूर्त्तिमाह ॥ **हिरण्येति** ॥ प्रणखो नखाग्रं तेन सहेत्यभिविधावाङ् । नेत्रयोर्विशेषमाह ॥ **तस्येति** ॥ कपेर्मर्कटस्य आसः पुच्छभागोऽत्यन्ततेजस्वी तत्तुल्यं पुण्डरीकं यथा

सं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदित, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इत्यधिदैवतम् । अथाध्यात्मम् "अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इत्यादि। तत्र संशयः । किं विद्याकर्मातिशयवशात् प्राप्तोत्कर्षः कश्चित् संसारी सूर्यमण्डले चक्षुषि चोपास्यत्वेन श्रूयते, किं वा नित्यसिद्धः परमेश्वर इति। किं तावत् प्राप्तं संसारीति, कुतः, रूपवत्त्वश्रवणात् । आदित्यपुरुषे तावद्धिरण्यश्मश्रुरित्यादिरूपमुदाहृतं, अक्षिपुरुषेऽपि तदेवातिदेशेन प्राप्यते "तस्यैतस्य तदेव रूपं यदमुष्य रूपम् इति। न च परमेश्वरस्य रूपवत्त्वं युक्तं "अशब्दमस्पर्शमरूपमव्ययम्" इति श्रु-

दीप्तिमदेवं तस्य पुरुषस्याक्षिणि सद्योविकसितरक्ताम्भोजनयन इत्यर्थः। उपासनार्थमादित्यमण्डलं स्थानं रूपं चोक्त्वा नाम करोति ॥ ॥ तस्योदिति ॥ उन्नाम निर्वक्ति ॥ स इति॥ उदित उद्गतः सर्वपाप्मास्पृष्ट इत्यर्थः। उपासनार्थं नामज्ञानफलमाह॥ उदेति हेति ॥ देवतास्थानम् आदित्यमधिकृत्योपास्त्युक्त्यनन्तरमात्मानं देहमधिकृत्यापि तदुक्तिरित्याह ॥ अथेति ॥ पूर्वत्र ब्रह्मपदमानन्दमयपदमानन्दपदाभ्यासश्चेति मुख्यत्रितयादि बहुप्रमाणवशान्निर्गुणानिर्णयवद्रूपवत्त्वादिबहुप्रमाणवशाज्जीवो हिरण्मय इति पूर्वसिद्धान्तदृष्टान्तसङ्गत्या पूर्वमुत्सर्गतः सिद्धनिर्गुणसमन्वयस्यापवादार्थं पूर्वपक्षयति ॥ ॥ संसारीति ॥ अत्र पूर्वोत्तरपक्षयोर्जीवब्रह्मणोरुपास्तिः फलं, अक्षि-

तेः। आधारश्रवणाच्च "य एषोऽन्तरादित्ये य एषोऽन्तरक्षिणि" इति । न ह्यनाधारस्य स्वमहिमप्रतिष्ठस्य सर्वव्यापिनः परमेश्वरस्याधार उपदिश्येत "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इति "आकाशवत्सर्वगतश्च नित्यः" इति च श्रुती भवतः। ऐश्वर्यमर्यादाश्रुतेश्च "स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" इत्यादित्यपुरुषस्यैश्वर्यमर्यादा "स एष चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च" इत्यक्षिपुरुषस्य । न च परमेश्वरस्य मर्यादावदैश्वर्यं युक्तं "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इत्यविशेषश्रुतेः। तस्मान्नाक्ष्यादित्ययोरन्तः परमेश्वर इत्येवं प्राप्ते ब्रूमः, अन्तस्तद्धर्मोपदेशात् , इति "य एषोऽन्तरादित्ये

णीत्याधारश्रवणाच्च संसारीति सम्बन्धः । श्रुतिमाह ॥ स एष इति ॥ आदित्यस्थः पुरुषः, अमुष्मादादित्यादूर्ध्वगा ये केचन लोकास्तेषामीश्वरो देवभोगानां चेत्यर्थः । स एषोऽक्षिस्थः पुरुष एतस्मादक्ष्णोऽधस्तना ये लोका ये च मनुष्यकामा भोगास्तेषामीश्वर इति मर्यादा श्रूयते। अतः श्रुतेश्च संसारीत्यर्थः । एष सर्वेश्वर इत्यविशेषश्रुतेरिति सम्बन्धः। भूताधिपतिर्यमः, भूतपाल इन्द्रादिश्च एष एव। किञ्च जलानामसङ्कराय लोके विधारको यथा सेतुरेवमेषां लोकानां वर्णाश्रमादीनां मर्यादा-

य एषोऽन्तरक्षिणि" इति च श्रूयमाणः पुरुषः स परमेश्वर एव न संसारी कुतः। तद्धर्मोपदेशात्। तस्य हि परमेश्वरस्य धर्मा इहोपदिष्टास्तद्यथा "तस्योदिति नाम" इति श्रावयित्वा "अस्यादित्यपुरुषस्य नाम स एष सर्वेभ्यः पाप्मभ्य उदितः" इति सर्वपाप्मापगमेन निर्वक्ति, तदेव च कृतनिर्वचनं नामाक्षिपुरुषस्याप्यतिदिशति "यन्नाम तन्नाम" इति। सर्वपाप्मापगमश्च परमात्मन एव श्रूयते "य आत्मा अपहतपाप्मा" इत्यादौ। तथा "चाक्षुषे पुरुषे सैव ऋक् तत् साम तदुक्थं तद्यजुस्तद्ब्रह्म" इत्यृक्सामाद्यात्मकतां निर्धारयति, सा च परमेश्वरस्योपपद्यते सर्वकारणत्वात् सर्वात्मकत्वोपपत्तेः। पृथिव्यग्न्या-

हेतुत्वात् सेतुरेष एव, अतः सर्वेश्वर इत्यर्थः। सूत्रं व्याचष्टे ॥ **य एष इति** ॥ यद्यप्येकस्मिन् वाक्ये प्रथमश्रुतानुसारेण चरमं नेयं, तथाप्यत्र प्रथमं श्रुतं रूपवत्त्वं निष्फलं ध्यानार्थमीश्वरे नेतुं शक्यं च सर्वपापासङ्गित्वं सर्वात्मैकत्वं तु सफलं जीवे नेतुमशक्यं चेति प्रबलं न च "न ह वै देवान् पापं गच्छति"इति श्रुतेरादित्यजीवस्यापि पाप्मास्पर्शित्वमिति वाच्यम्, श्रुतेरधुना कर्मानधिकारिणां देवानां क्रियमाणपाप्मासम्बन्धे तत्फलास्पर्शे वा तात्पर्यात् तेषां सञ्चितपापाभावे "क्षीणे पुण्ये मर्त्यलोकं विशन्ती"ति अयोगादित्यभिप्रेत्याह ॥ **सर्वपाप्मापगमश्च परमात्मन एवेति** ॥ सार्वात्म्यमाह ॥ **तथेति** ॥ अत्र तच्छब्दैश्चाक्षुषः पुरुष उच्यते ऋगाद्यपेक्षया लिङ्गव्यत्ययः ॥ उ-

द्यात्मके चाधिदैवतमृक्सामे वाक्प्राणाद्यात्मके चाध्यात्ममनुक्रम्याह तस्यर्क् साम च गेष्णावित्यधिदैवतं तथाध्यात्ममपि "यावमुष्य गेष्णौ तौ गेष्णौ" इति। तच्च सर्वात्मकत्वे सत्येवोपपद्यते "तद्य इमे वीणायां गायन्त्येतं त्वेव ते गायन्ति तस्मात्ते धनसनयः" इति च लौकिकेष्वपि गानेष्वस्यैव गीयमानत्वं दर्शयति। तच्च परमेश्वरपरिग्रहे घटते॥

यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्॥

इति भगवद्गीतादर्शनात् लोककामेशितृत्वमपि

कथं शस्त्रविशेषः। तत्साहचर्यात् साम स्तोत्रम् उक्थादन्यच्छस्त्रमृगुच्यते, यजुर्वेदो यजुः, ब्रह्म त्रयो वेदा इत्यर्थः॥ **पृथिव्यग्न्याद्यात्मक इति॥** अधिदैवतमृक् पृथिव्यन्तरिक्षद्युनक्षत्रादित्यगतशुल्कभारूपा पञ्चविधा श्रुत्युक्ता, साम चाग्निवाय्वादित्यचन्द्रादित्यगतातिकृष्णरूपमुक्तं पञ्चविधम्। अध्यात्मं तु ऋग्वाक्चक्षुःश्रोत्राक्षिस्थशुक्लभारूपा चतुर्विधा, साम च प्राणच्छायात्ममनोऽक्षिगतातिनीलरूपं चतुर्विधमुक्तम्।एवं क्रमेण ऋक्सामे अनुक्रम्याह श्रुतिः॥**तस्येति॥** यौ सर्वात्मकऋक्सामात्मकौ गेष्णावमुष्यादित्यस्थस्य तावेवाक्षिस्थस्य गेष्णौ पर्वणीत्यर्थः॥ **तच्चेति॥** ऋक्सामगेष्णत्वमित्यर्थः। सर्वगानगेयत्वं लिङ्गान्तरमाह॥**तद्य इति॥** तत्तत्र लोके धनस्य सनिर्लाभो येषां ते धनसनयो विभूतिमन्त इत्यर्थः। ननु लोके राजानो गीयन्ते नेश्वर इत्यत आह॥ **यद्यदिति॥** पशुवित्तादिर्विभूतिः, श्रीः

निरङ्कुशं श्रूयमाणं परमेश्वरं गमयति। यत्तूक्तं हिरण्यश्मश्रुरित्यादिरूपश्रवणं परमेश्वरे नोपपद्यते इत्यत्र ब्रूमः, स्यात् परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्।

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं मैवं मां द्रष्टुमर्हसि॥

इति स्मरणात्। अपि च यत्र तु निरस्तसर्वविशेषं पारमेश्वरं रूपमुपदिश्यते, भवति तत्र शास्त्रं "अशब्दमस्पर्शमरूपमव्ययम्" इत्यादि। सर्वकारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वर उपास्यत्वेन निर्दिश्यते "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" इत्यादिना, तथा हिरण्यश्मश्रुत्वादिनिर्देशोऽपि भविष्यति। यदप्याधारश्रवणान्न परमेश्वर इत्यत्रोच्यते स्वमहिमप्रतिष्ठस्याप्याधारविशेषोपदेश उपासनार्थो भविष्यति सर्वगतत्वाद्ब्रह्मणो व्योमवत् सर्वा-

कान्तिः। ऊर्जितत्वं बलं, तद्युक्तं सत्त्वं राजादिकं मदंश एवेति तज्ज्ञानमीश्वरस्यैवेत्यर्थः निरङ्कुशमनन्याधीनं, एषा विचित्ररूपा मूर्तिर्माया विकृतित्वान्माया मया सृष्टेत्यर्थः। यदुक्तमशब्दमित्यादिवाक्यं तत् ज्ञेयपरमित्याह॥ अपि चेति॥ तर्हि रूपं कुतस्तत्राह॥ सर्वेति॥ यत्र तूपास्यत्वेनोच्यते तत्रेत्यध्याहृत्य सर्वकारणत्वात् प्राप्तरूपवत्त्वं सर्वकर्मेत्यादिश्रुत्या निर्दिश्यत इति योजना। मर्यादावदैश्वर्य-

न्तरत्वोपपत्तेः । ऐश्वर्यमर्यादाश्रवणमप्याध्यात्माधिदैवतविभागापेक्षमुपासनार्थमेव, तस्मात्परमेश्वर एवाक्ष्यादित्ययोरन्तरुपदिश्यते ॥ २० ॥

## भेदव्यपदेशाच्चान्यः ॥२१॥

अस्ति च आदित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" इति श्रुत्यन्तरे भेदव्यपदेशात् । तत्र ह्यादित्यादन्तरो यं आदित्यो न वेदेति वेदितुरादित्यात् विज्ञानात्मनोऽन्योऽन्तर्यामीति स्पष्टं निर्दिश्यते स एवेहाप्यन्तरादित्ये

मीश्वरस्य नेत्युक्तं निराकरोति ॥ ऐश्वर्येति ॥ अध्यात्माधिदैवतध्यानयोर्विभागः पृथक्प्रयोगः, तदपेक्षमेव न त्वैश्वर्यस्य परिच्छेदार्थमित्यर्थः ॥ २० ॥ ननु उपास्योद्देशेनोपास्तिविधेर्विधेयक्रियाकर्मणो व्रीह्यादिवदन्यतः सिद्धिर्वाच्येत्याशङ्क्याह ॥ भेदेति ॥ आदित्यजीवादीश्वरस्य भेदोक्तेः श्रुत्यन्तरे जीवादन्य ईश्वरः सिद्ध इति सूत्रार्थमाह ॥ अस्तीति ॥ आदित्ये स्थितरश्मिनिरासार्थमादित्यादन्तर इति । जीवं निरस्यति ॥ यमिति ॥ अशरीरस्य कथं नियन्तृत्वं तत्राह ॥ यस्येति ॥ अन्तर्यामिपदार्थमाह ॥ य इति ॥ तस्यानात्मत्वनिरासायाह ॥ एष त इति ॥ ते तव स्वरूपमित्यर्थः, आदित्यान्तरत्वश्रुतेः समानत्वादित्यर्थः । तस्मात् पर एवादित्यादिस्थानक उद्गी-

पुरुषो भवितुमर्हति श्रुतिसामान्यात्। तस्मात् परमेश्वर एवेहोपदिश्यत इति सिद्धम्॥ २१॥

## आकाशस्तल्लिङ्गात्॥ २२॥

इदमामनन्ति "अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इति। तत्र संशयः। किमाकाशशब्देन परं ब्रह्माभिधीयते, उत भूताकाशमिति। कुतः संशयः। उभयत्र प्रयोगदर्शनात्। भूतविशेषे तावत् सुप्रसिद्धो लोकवेदयोराकाशशब्दो ब्रह्मण्यपि क्वचित् प्रयुज्यमानो दृश्यते, यत्र वाक्यशेषवशादसाधारणगुणश्रवणाद्वा निर्धारितं ब्रह्म भवति यथा "यदेष आकाश आनन्दो न स्यात्" इति, "आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति चैवमादौ, अतः संशयः। किं पुनरत्र यु-

थे उपास्य इति सिद्धम्॥ २१॥ भवतु रूपवत्त्वादिदुर्बललिङ्गानां पापास्पर्शित्वाद्यव्यभिचारिब्रह्मलिङ्गैरन्यथानयनं, इह त्वाकाशपदश्रुतिः लिङ्गाद्बलीयसीति प्रत्युदाहरणेन प्राप्ते प्रत्याह॥ आकाशस्तल्लिङ्गादिति॥ छान्दोग्यवाक्यमुदाहरति॥ इदमिति॥ शालावत्यो ब्राह्मणो जैवलिं राजानं पृच्छति, अस्य पृथ्वीलोकस्यान्यस्य च क आधार

कं भूताकाशमिति, कुतः, तद्धि प्रसिद्धतरेण प्रयोगेण शीघ्रं बुद्धिमारोहति । न चायमाकाशशब्द उभयोः साधारणः शक्यो विज्ञातुं, अनेकार्थत्वप्रसङ्गात् । तस्माद्ब्रह्मणि गौण आकाशशब्दो भवितुमर्हति । विभुत्वादिभिर्हि बहुभिर्धर्मैः सदृशमाकाशेन ब्रह्म भवति, न च मुख्यसम्भवे गौणोऽर्थो ग्रहणमर्हति, सम्भवति चेह मुख्यस्यैवाकाशस्य ग्रहणम् । ननु भूताकाशपरिग्रहे वाक्यशेषो नोपपद्यते "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इत्यादिः । नैष दोषो भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वोपपत्तेः । विज्ञायते हि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः" इत्यादि । ज्यायस्त्वपरायणत्वे अपि भूतान्तरापेक्षयोपपद्येते भूताकाशस्यापि, तस्मादाकाशशब्देन भूताकाशस्य ग्रहणमित्येवं प्राप्ते ब्रूमः, आकाशस्तल्लिङ्गात् । आकाशशब्देनेह ब्र-

इति । राजा ब्रूते आकाश इतिहेति ॥ यदेष आकाश इत्यानन्दत्वस्यासाधारणस्य श्रवणादाकाशो ब्रह्मेत्यवधारितम् । आकाशो वै नामेत्यत्र तद्ब्रह्मेति वाक्यशेषादिति विभागः । निर्वहिता उत्पत्तिस्थितिहेतुः, ते नामरूपे, यदन्तरा यस्माद्भिन्ने यत्र कल्पितत्वेन मध्ये स इति वार्थः । अत्र पूर्वपक्षे भूताकाशात्मनोद्गीथोपास्तिः, सिद्धान्ते ब्रह्मात्मना

ह्मणो ग्रहणं युक्तम्। कुतः। तल्लिङ्गात्। परस्य हि ब्रह्मण इदं लिङ्गं "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इति। परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्यादा। ननु भूताकाशस्यापि वाय्वादिक्रमेण कारणत्वं दर्शितम्। सत्यं दर्शितम्। तथापि मूलकारणस्य ब्रह्मणोऽपरिग्रहादाकाशादेवेत्यवधारणं सर्वाणीति च भूतविशेषणं नानुकूलं स्यात्। तथा "आकाशं प्रत्यस्तं यन्ति" इति ब्रह्मलिङ्गं "आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इति च (ज्यायस्त्वपरायणत्वे) ज्यायस्त्वं ह्यनापेक्षिकं परमात्मन्येवैकस्मिन्नाम्नातं "ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" इति, तथा परायणत्वमपि परमकारणत्वात् परमात्मन्येवोपपन्नतरम्। श्रु-

इति फलम् उपास्ये स्पष्टब्रह्मलिङ्गवाक्यसमन्वयोक्तेरापादं श्रुत्यादिसङ्गतयः। स्पष्टमत्र भाष्यम्। तेजःप्रभृतिषु वाय्वादेरपि कारणत्वात् एवकारश्रुतिबाधः। सर्वश्रुतेश्चाकाशातिरिक्तविषयत्वेन सङ्कोचः स्यादित्याह ॥ सत्यं दर्शितमिति ॥ ब्रह्मणस्तु सर्वात्मकत्वात्तस्मादेव सर्वमिति श्रुतिर्युक्तेति भावः। तथा सर्वलयाधारत्वं निरतिशयमहत्त्वं स्थितावपि परमाश्रयत्वमित्येतानि स्पष्टानि ब्रह्मलिङ्गानीत्याह ॥ **तथा आकाशमित्यादिना** ॥ रातेर्धनस्य दातुः। रातिरिति पाठे बन्धु-

तिश्च भवति "विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणम्" इति। अपि चान्तवत्त्वदोषेण शालावत्यस्य पक्षं निन्दित्वाऽनन्तं किञ्चिद्वक्तुकामेन जैवलिनाऽऽकाशः परिगृहीतः, तञ्चाकाशमुद्गीथे सम्पाद्योपसंहरति "स एष परो वरीयानुद्गीथः स एषोऽनन्तः" इति, तच्चानन्त्यं ब्रह्मलिङ्गम्। यत् पुनरुक्तं भूताकाशं प्रसिद्धिबलेन प्रथमतरं

रित्यर्थः। लिङ्गान्तरमाह ॥ अपि चेति ॥ दाल्भ्यशालावत्यौ ब्राह्मणौ राजा चेति त्रय उद्गीथविद्याकुशला विचारयामासुः किमुद्गीथस्य परायणमिति। तत्र स्वर्गादागताभिरद्भिर्जीवितेन प्राणेन क्रियमाणोद्गीथस्य स्वर्ग एव परायणमिति दाल्भ्यपक्षमप्रतिष्ठादोषेण शालावत्यो निन्दित्वा स्वर्गस्यापि कर्मद्वारा हेतुरयं लोकः प्रतिष्ठेत्युवाच। तं शालावत्यस्य पक्ष"मन्तवद्वै किल ते शालावत्य सामे"ति राजा निन्दित्वानन्तमेवाकाशं वक्ति भूताकाशोक्त्यावन्तवत्त्वदोषतादवस्थ्यादित्यर्थः। नन्वाकाशोऽनन्त इति न श्रुतम् इत्याशङ्क्याह ॥ तं चेति ॥ उद्गीथ आकाश एवेति सम्पादनात् उद्गीथस्यानन्तत्वादिकं न स्वत इति भावः। स उद्गीथावयव ॐकार एष आकाशात्मकः परः, रसतमत्वादिगुणैरुत्कृष्टः। अतोऽक्षरान्तरेभ्यो वरीयान् श्रेष्ठ इत्यर्थः ॥ पर इति अव्ययं सकारान्तं वा, परः कृत्स्नमिति प्रयोगात्। परश्चासौ वरेभ्योऽतिशयेन वरः परोवरीयान् इत्यर्थः। प्राथम्यात् श्रुतित्वाच्चाकाशशब्दो बलीयानित्युक्तं स्मारयति ॥ यत् पुनरिति ॥ एवकारसर्वशब्दानुगृहीतानन्त्यादिबहुलिङ्गानामनुग्रहाय "त्यजेदेकं कुलस्यार्थे" इति न्यायेनैकस्याः श्रुतेर्बाधो युक्त इत्याह ॥ अत्र ब्रूम इति ॥ आकाशपदाद्भूतस्यैव प्रथमप्रतीतिरिति नियमो नास्तीत्यपिशब्देन द्योतितम्।

प्रतीयत इति' अत्र ब्रूमः, प्रथमतरं प्रतीतमपि' सद्वाक्यशेषगतान् ब्रह्मगुणान् दृष्ट्वा न परिगृह्यते। दर्शितश्च ब्रह्मण्यप्याकाशशब्दः "आकाशो वै नामरूपयोर्निर्वहिता" इत्यादौ। तथाकाशपर्यायवाचिनामपि ब्रह्मणि प्रयोगो दृश्यते "ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः" "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" "ॐ कं ब्रह्म खं ब्रह्म खं पुराणम्" इति चैवमादौ। वाक्योपक्रमेऽपि वर्तमानस्याकाशशब्दस्य वाक्यशेषवशाद्युक्ता ब्रह्मविषयत्वावधारणा। "अग्निरधीतेऽनुवाकम्" इति हि वाक्योपक्रमगतोऽप्यग्निशब्दो माणवकविषयो दृश्यते। तस्मादाकाशशब्दं ब्रह्मेति सिद्धम्॥ २२॥

तत्र युक्तिमाह॥ दर्शितश्चेति॥ आकाशपदाद्गौणार्थस्य ब्रह्मणोऽपि प्रथमप्रतीतिरस्ति तस्य तत्पर्यायाणां च ब्रह्मणि प्रयोगप्राचुर्यादिति भावः। अक्षरे कूटस्थे व्योमन् व्योम्नि ऋचो वेदाः सन्ति प्रमाणत्वेन यस्मिन्नक्षरे विश्वे देवा अधिष्ठिता इत्यर्थः। ॐकारः कं सुखं ब्रह्म खं व्यापकमित्युपासीत श्रुत्यन्तरप्रयोगमाह॥ खं पुराणमिति॥ व्याप्यनादि ब्रह्मेत्यर्थः। कं ब्रह्म खं ब्रह्मेति छान्दोग्यं, ॐ खं ब्रह्म खं पुराणमिति बृहदारण्यकमिति भेदः। किं च तत्रैव प्रथमानुसारेणोत्तरं नेयं यत्र तन्नेतुं शक्यं, यत्र त्वशक्यं तत्रोत्तरानुसारेण प्रथमं नेयमित्याह॥ वाक्येति॥ तस्मादुपास्ये ब्रह्मणि वाक्यं समन्वितमित्युप-

## अतएव प्राणः ॥ २३ ॥

"उद्गीथे" "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" इत्युपक्रम्य श्रूयते "कतमा सा देवतेति प्राण इति होवाच' सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति 'प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" इति। तत्र संशयनिर्णयौ पूर्ववदेव द्रष्टव्यौ, "प्राणबन्धनं हि सोम्य मनः प्राणस्य प्राणम्" इति चैवमादौ ब्रह्मविषयः प्राणशब्दो दृश्यते, वायुविकारे तु प्रसिद्धतरो लोकवेदयोरित इह प्राणशब्देन कतरस्योपादानं युक्तमिति भवतिसंशयः। किं पुन-

संहरति ॥ तस्मादिति ॥ २२ ॥ आकाशवाक्योक्तन्यायं तदुत्तरवाक्येऽतिदिशति ॥ अत एव प्राणः ॥ उद्गीथप्रकरणमिति ज्ञापनार्थमुद्गीथ इति भाष्यपदम् उद्गीथप्रकरणे श्रूयते इत्यन्वयः। कश्चिदृषिश्चाक्रायणः प्रस्तोतारमुवाच, हे प्रस्तोतः या देवता प्रस्तावं सामभक्तिमनुगताध्यानार्थं तां चेद्देवतामज्ञात्वा मम विदुषो निकटे प्रस्तोष्यसि मूर्धा ते पतिष्यतीति । ततो भीतः सन् पप्रच्छ कतमा सा देवतेति उत्तरम् ॥ प्राण इति ॥ प्राणमभिलक्ष्य सम्यक् विशन्ति लीयन्ते' तमभिलक्ष्योज्जिहते उत्पद्यन्त इत्यर्थः । अतिदेशत्वात् पूर्ववत् संशयादि द्रष्टव्यमित्युक्तं विवृणोति ॥ प्राणेति ॥ मनउपाधिको जीवः, प्राणेन ब्रह्मणा बध्यते सुषुप्तावेकीभवति प्राणस्य वायोः प्राणं प्रेरकं तस्य सत्तास्फूर्त्तिप्रदमात्मानं ये विदुस्ते ब्रह्मविद इत्यर्थः। पूर्वेण गता-

रत्र युक्तं वायुविकारस्यं पञ्चवृत्तेः प्राणस्योपादानं युक्तम् । तत्र हि प्रसिद्धतरः प्राणशब्द इत्यवोचाम । ननु पूर्ववदिहापि तल्लिङ्गात् ब्रह्मण एव ग्रहणं युक्तमिहापि हि वाक्यशेषे भूतानां संवेशनोद्गमनं पारमेश्वरं कर्म प्रतीयते । न, मुख्येऽपि प्राणे भूतसंवेशनोद्गमनस्य दर्शनात् । एवं ह्याम्नायते "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते" इति । प्रत्यक्षञ्चैतत् स्वापकाले प्राणवृत्तावपरिलुप्यमानायामिन्द्रियवृत्तयः परिलुप्यन्ते, प्रबोधकाले च पुनः प्रादुर्भवन्तीति । इन्द्रियसारत्वाच्च भूतानामविरुद्धो मुख्ये प्राणेऽपि भूतसंवेशनोद्गमनवादी वाक्यशेषः । अपि चादित्योऽ-

र्थत्वात् पृथक्सूत्रं व्यर्थमिति शङ्कते ॥ **ननु पूर्ववदिति** ॥ अधिकाशङ्कानिरासार्थमातिदेशसूत्रमिति मत्वा शङ्कामाह ॥ **न मुख्येऽपीति** ॥ तर्हि तदा चक्षुरप्येतीति एवम्प्रकारेण सर्वत्र सम्बन्धः । नन्वत्रेन्द्रियाणां प्राणे लयोदयौ श्रूयेते तावता महाभूतलयादिप्रतिपादकवाक्यशेषोपपत्तिः कथमित्यत आह ॥ **इन्द्रियसारत्वादिति** ॥ "इत्यस्य ह्येष रसः," इति श्रुतः इन्द्रियाणि लिङ्गात्मरूपाणि अपञ्चीकृतभूतानां साराणि तेषां लयायुक्त्या भूतानामपि प्राणे लयादिसिद्धेः वाक्यशेषोपपत्तिरित्यर्थः । अब्रह्मसहपाठाच्च प्राणो न ब्रह्मेत्याह ॥ **अपि**

न्नश्चोद्गीथप्रतिहारयोर्देवते प्रस्तावदेवतायां प्राणस्यानन्तरं निर्दिश्येते, न च तयोर्ब्रह्मत्वमस्ति तत्सामान्याच्च प्राणस्यापि न ब्रह्मत्वमित्येवं प्राप्ते सूत्रकार आह। "अतएव प्राण" इति। तल्लिङ्गादिति पूर्वसूत्रे निर्दिष्टमेत एव तल्लिङ्गात् प्राणशब्दमपि परं ब्रह्म भवितुमर्हति, प्राणस्यापि हि ब्रह्मलिङ्गसम्बन्धः श्रूयते "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति प्राणनिमित्तौ सर्वेषां भूतानामुत्पत्तिप्रलयावुच्यमानौ प्राणस्य ब्रह्मतां गमयतः। ननूक्तं मुख्यप्राणपरिग्रहेऽपि संवेशनोद्गमनदर्शनमेविरुद्धं स्वापप्रबोधयोर्दर्शनादिति। अत्रोच्यते। स्वापप्रबोधयोरिन्द्रियाणामेव केवलानां प्राणाश्रयं संवेशनोद्गमनं दृश्यते, न सर्वेषां भूतानाम् इह तु सेन्द्रियाणां सशरीराणाञ्च जीवाविष्टानां भूतानां "सर्वाणि ह वा इमानि भूता-

चेति॥ उद्गातृप्रतिहर्तृभ्यामुद्गीथे प्रतिहारे च का देवतेति पृष्टेन चाक्रायणेनादित्योऽन्नं च निर्दिश्येते आदित्य इति होवाच अन्नमिति होवाचेति श्रुताविर्त्यर्थः। सामान्यं सन्निध्यनुगृहीतप्रथमश्रुतप्राणश्रुत्या मुख्यप्राणनिर्णये तद्दृष्ट्या प्रस्तावोपास्तिरिति पूर्वपक्षफलं, सिद्धान्ते ब्रह्मदृष्टिरूपोपास्तिः। अस्याधिकरणस्यातिदेशत्वमेव पूर्वेण सङ्गतिरिति विभागः भवन्तीति भूतानीति व्युत्पत्त्या यत्किञ्चिद्भवन धर्म-

नि" इति श्रुतेः। यदाऽपि भूतश्रुतिः महाभूतविषया परिगृह्यते तदापि ब्रह्मलिङ्गत्वमविरुद्धम्। ननु सहापि विषयैरिन्द्रियाणां स्वापप्रबोधयोः प्राणेऽप्ययं प्राणाच्च प्रभवं शृणुमः "यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति" इत्यत्र तत्रापि तल्लिङ्गात् प्राणशब्दं ब्रह्मैव। यत् पुनरन्नादित्यसन्निधानात् प्राणस्याब्रह्मत्वमिति तदयुक्तं वाक्यशेषबलेन प्राणशब्दस्य ब्रह्मविषयतायां प्रतीयमानायां सन्निधानस्याकिञ्चित्करत्वात्। यत् पुनः प्राणशब्दस्य पञ्चवृत्तौ प्रसिद्धतरत्वं तदाकाशशब्दस्येव प्रतिविं-

कं कार्यमात्रं तस्य लयोदयौ वायुविकारे प्राणेन युक्तावित्युक्त्वा भूतशब्दस्य रूढार्थग्रहेऽपि लयादेर्ब्रह्मनिर्णायकत्वमित्याह ॥ यदापीति ॥ भौतिकप्राणस्य भूतयोनित्वायोगादित्यर्थः। तस्य तद्योनित्वं श्रुत्या शङ्कते ॥ नन्विति ॥ अथ यदा सुषुप्तौ जीवः प्राणे ब्रह्मण्येकीभवति तदा एनं प्राणं सविषया वागादयोऽपि यन्तीत्यर्थः। अत्र जीवाभिन्नत्वसर्वलयाधारत्वलिङ्गान्नमुख्यः प्राण इत्याह ॥तत्रापीति॥ वाक्यान्तरसान्निध्यपेक्षया स्ववाक्यगतं लिङ्गं बलीय इत्याह॥ तदयुक्तमिति॥ एकवाक्यत्वं वाक्यशेषः तस्य बलं तद्गतं लिङ्गं तेनेत्यर्थः। प्राणमेवेत्यवधारणेन सर्वभूतप्रकृतित्वलिङ्गेन च प्राणपदेन तत्कारणं ब्रह्म लक्ष्यमित्याह ॥ तदाकाशशब्दस्येवेति ॥ वृत्तिकृतामुदाहरणं सं-

१ समाधेयम।

धेयम्। तस्मात् सिद्धं प्रस्तावदेवतायाः प्राणस्य ब्रह्मत्वम्। अत्र केचिदुदाहरन्ति "प्राणस्य प्राणं प्राणबन्धनं हि सोम्य मन" इति च तदयुक्तं शब्दभेदात् प्रकरणाच्च संशयानुपपत्तेः। यथा पितुःपितेति प्रयोगे अन्यः षष्ठीनिर्दिष्टात्प्रथमानिर्दिष्टः पितुः पितेति गम्यते, तद्वत् प्राणस्य प्राणमिति शब्दभेदात् प्रसिद्धात् प्राणादन्यः प्राणस्य प्राणम् इति निश्चीयते। न हि स एव तस्येति भेदनिर्देशार्हो भवति। यस्य च प्रकरणे यो निर्दिश्यते नामान्तरेणापि स एव तत्र प्रकरणनिर्दिष्ट इति गम्यते। यथा ज्योतिष्टोमाधिकारे "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यत्र ज्योतिःशब्दो ज्योतिष्टोमविषयो भवति तथा परस्य ब्रह्मणः प्रकरणे "प्राणबन्धनं हि सोम्य मन" इति श्रुतः प्राणशब्दो वायुविकारमात्रं कथमवगमयेदतः संशयाविषयत्वान्नैतदुदाहरणं युक्तम्। प्रस्तावदेवतायान्तु प्राणे संशयपूर्वपक्षनिर्णया उपपादिताः ॥ २३ ॥

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥

इदमामनन्ति "अथ यदतः परो दिवो ज्योति-

शयाभावेनायुक्तमित्याह ॥ अत्रेत्यादिना ॥ शब्दभेदमुक्त्वा प्रकरणं

दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इति। तत्र संशयः। किमिह ज्योतिःशब्देनादित्यादिकं ज्योतिरभिधीयते किंवा पर आत्मेति' अर्थान्तरविषयस्यापि शब्दस्य तल्लिङ्गाद्ब्रह्मविषयत्वमुक्तम्, इह तल्लिङ्गमेवास्ति नास्तीति विचार्यते। किं तावत् प्राप्तम्, आदित्यादिकमेव ज्योतिःशब्देन परिगृह्यते इति। कुतः। प्रसिद्धेः, तमो ज्योतिरिति हीमौ शब्दौ परस्परप्रतिद्वन्द्विविषयौ प्रसिद्धौ। चक्षुर्वृत्तेर्निरोधकं शार्वरादिकं तम उच्यते तस्या एवा-

प्रपञ्चयति॥ **यस्य चेति**॥ २३॥ **ज्योतिश्चरणाभिधानात्**॥ छान्दोग्यमेवोदाहरति॥ **इदमिति**॥ गायत्र्युपाधिकब्रह्मोपास्त्यानन्तर्यार्थोऽथशब्दः। अतो दिवो द्युलोकात् परः परस्ताद्यत् ज्योतिर्दीप्यते तद्यादिदमिति जाठराग्नावध्यस्यते। कुत्र दीप्यत तत्राह॥ **विश्वत इति**॥ विश्वस्मात् प्राणिवर्गादुपरि' सर्वस्मात् भूरादिलोकादुपरि' ये लोकास्तेषूत्तमेषु' न विद्यन्ते उत्तमा येभ्य इत्यनुत्तमेषु'सर्वसंसारमण्डलातीतं परं ज्योतिरिदमेव यद्देहस्थमित्यर्थः। अस्य पूर्वेणागतार्थत्वं वदन् प्रत्युदाहरणसङ्गतिमाह॥ **अर्थान्तरेति**॥ अत्र स्ववाक्ये स्पष्टब्रह्मलिङ्गाभावेऽपि "पादोस्ये"ति पूर्ववाक्ये भूतपादत्वं लिङ्गमस्तीति पादसङ्गतिः। पूर्वोत्तरपक्षयोर्जडब्रह्मज्योतिषोरुपास्तिः फलमिति भेदः। नन्वज्ञानतमोविरोधित्वात् ब्रह्मापि ज्योतिःपदशक्यतया प्रसिद्धमस्ति नेत्याह॥ **चक्षुरिति**॥ शर्वर्यां रात्रौ भवं शार्वरं नीलमिति यावत्, अनेनावर-

नुग्राहकमादित्यादिकं ज्योतिस्तथा दीप्यते इ-तीयमपि श्रुतिरादित्यादिविषया प्रसिद्धा। न हि रूपादिहीनं ब्रह्म दीप्यत इति मुख्यां श्रुतिमर्हति। द्युमर्यादत्वश्रुतेश्च, न हि चराचरबीजस्य ब्रह्मणः सर्वात्मकस्य द्यौर्मर्यादा युक्ता, कार्यस्य तु ज्योतिषः परिच्छिन्नस्य द्यौर्मर्यादा स्यात्-परो दिवो ज्योतिरिति च ब्राह्मणम्। ननु कार्यस्यापि ज्योतिषः सर्वत्र गम्यमानत्वात् द्युमर्यादावत्त्वमसमञ्जसम्, अस्तु तर्ह्यत्रिवृत्कृतं तेजः प्रथमजम्। न, अत्रिवृत्कृतस्य तेजसः प्रयोजनाभावादिति। इदमेव प्रयोजनं यदुपास्यत्वमिति चेत्, न, प्रयोजनान्तरप्रयुक्तस्यैवादित्यादेरुपास्यत्वदर्शनात्। "तासां त्रिवृतं त्रिवृतमेकैकां क-

कत्वाद्रूपवत्त्वाच्च कुड्यवद्भावरूपं तम इत्यर्थादुक्तं भवति। ज्योतिःश्रुतेरनुग्राहकलिङ्गान्याह ॥ तथेत्यादिना ॥ भास्वररूपात्मिका दीप्तिस्तेजस एवलिङ्गमित्याह ॥ नहीति ॥ मास्तु मर्यादेत्याशङ्क्य श्रुतत्वान्नैवमित्याह ॥ परो दिव इति ॥ मर्यादां ब्रूत इति शेषः। ब्रह्मवत् कार्यस्यापि मर्यादायोगान्निरर्थकं ब्राह्मणमिति कश्चिदाक्षिपति ॥ नन्विति ॥ एकदेशी ब्रूते ॥ अस्त्विति ॥ स्वर्गादौ जातं किञ्चिदतीन्द्रियं तेजो दिवः परस्तादस्ति श्रुतिप्रामाण्यादित्यर्थः। अध्ययनविध्युपात्तश्रुतेर्निष्फलं वस्तु नार्थ इत्याक्षेप्ता ब्रूते ॥ नेति ॥ ध्यानं फलमित्याशङ्क्य निष्फलस्य क्वापि ध्यानं नास्तीत्याह ॥ इदमेवेत्यादिना॥

रवाणि" इति चाविशेषश्रुतेः। न चात्रिवृत्कृतस्यापि तेजसो द्युमर्यादत्वं प्रसिद्धम्, अस्तु तर्हि त्रिवृत्कृतमेव तत्तेजो ज्योतिःशब्दम्। ननूक्तमर्वागपि दिवोऽवगम्यतेऽग्न्यादिकं ज्योतिरिति, नैष दोषः सर्वत्रापि गम्यमानस्य ज्योतिषः परो दिव इति उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते, न तु निष्प्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना भागिनी। "सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु" इति चाधारबहुत्वश्रुतिः कार्ये ज्योतिषि उपपद्यतेतराम्, "इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः" इति च कौक्षेये ज्योतिषि परं ज्योतिर-

प्रयोजनान्तरं तमोनाशादिकम् अत्रिवृत्कृतं तेजोऽङ्गीकृत्याफलत्वमुक्त्वा तदेव नास्तीत्याह ॥ **तासामिति** ॥ तेजोऽबन्नानां देवतानामेकैकान् द्विधा विभज्य पुनश्चैकैकं भागं द्विधा कृत्वा स्वभागादितरभागयोर्निक्षिप्य तन्त्रिगुणरज्जुवत्त्रिवृतं करवाणीत्यविशेषोक्तेर्नास्त्यत्रिवृत्कृतं किञ्चिदित्यर्थः। किञ्चात्र यदतः पर इति यच्छब्देनान्यतः प्रसिद्धं द्युमर्यादत्वं ध्यानायानूद्यते। न चात्रिवृत्कृतस्य तस्य तत् क्वचित् प्रसिद्धमित्याह ॥ **न चेति** ॥ एकदेशिमते निरस्ते साक्षात् पूर्वपक्षी ब्रूते ॥ **अस्तु तर्हीति** ॥ प्रदेशविशेषः दिवः परस्ताद्देदीप्यमानः सूर्यादितेजोऽवयवविशेषः तस्य परिग्रह उपासनार्थो न विरुध्यत इत्यन्वयः स एव कौक्षये ज्योतिषि उपास्यते तस्यापि तेजस्त्वादिति भावः। ब्रह्मणोऽपिध्यानार्थं प्रदेशस्थत्वं कल्प्यतां नेत्याह ॥ **न त्विति** ॥ निष्प्रदेशस्य निरवयवस्य विशेषेऽति दिवः परस्ताद्देदीप्यमानब्रह्मावयवकल्पनाभागि-

ध्यस्यमानं दृश्यते। सारूप्यनिमित्ताश्चाध्यासा भवन्ति यथा- "तस्य भूरिति शिर एकं हि शिर एकमेतदक्षरम्" इति कौक्षेयस्य तु ज्योतिषः प्रसिद्धमब्रह्मत्वं- "तस्यैषा दृष्टिस्तस्यैषा श्रुतिः" इति चौष्ण्यघोषविशिष्टत्वस्य श्रवणात् "तदेतत् दृष्टञ्च श्रुतञ्चेत्युपासीत" इति च श्रुतेश्चक्षुष्यः श्रुतो भवति; य एवं वेदेति चाल्पफलश्रवणादब्रह्मत्वं महते हि फलाय ब्रह्मोपासनमिष्यते। न चान्यदपि किञ्चित् स्ववाक्ये प्राणाकाशवज्ज्योतिषोऽस्ति ब्रह्मलिङ्गम्। न च पूर्वस्मिन्नपि वाक्ये ब्रह्म निर्दिष्टमस्ति- "गायत्री वा इदं सर्वं भूतम्" इति छन्दोनिर्देशात्। अथापि कथं-

नी युक्ता न त्वित्यन्वयः। अप्रामाणिकगौरवापातादिति भावः। ततः किं तत्राह ॥ सारूप्येति ॥ यथा ऐकत्वसाम्याद्भूरिति व्याहृतौ प्रजापतेः शिरोदृष्टिः श्रुता तथा जाठराग्नावब्रह्मत्वं घोषादिश्रुत्या सिद्धमिति जडज्योतिष्ट्वं साम्यं वाच्यमित्यर्थः। यद्देहस्पर्शनेनौष्ण्यज्ञानं प्रसिद्धं सैषा तस्य जाठराग्नेर्दृष्टिः, यत् कर्णपिधानेन घोषश्रवणं, सैषा तस्य श्रुतिरित्यर्थः। ज्योतिषो जडत्वे लिङ्गान्तरमाह ॥ तदेतदिति ॥ ज्योतिरित्यर्थः। चक्षुष्यश्चक्षुर्हितः सुन्दरः, श्रुतो विख्यातः। न चान्यदपीति ॥ ब्रह्मलिंगमपि किञ्चिदन्यन्नास्तीत्यन्वयः। ननु त्रिपादस्यामृतं दिवीति पूर्ववाक्योक्तं ब्रह्मात्र ज्योतिःपदेन गृह्यतामित्याशङ्क्याह ॥ न चेति ॥ ननु सर्वात्मकत्वामृतत्वाभ्यां ब्रह्मोक्तमित्यत आह ॥ अथापीति ॥ कथंचिच्छन्दोद्वारेत्यर्थः। दिवि दिव इति विभक्तिभेदान्न

श्चित् पूर्वस्मिन् वाक्ये ब्रह्म निर्दिष्टं स्यात्; एवमपि न तस्येह प्रत्यभिज्ञानमस्ति तत्र हि—"त्रिपादस्यामृतं दिवि" इति द्यौरधिकरणत्वेन श्रूयते, अत्र पुनः "परो दिवो ज्योतिः" इति द्यौर्मर्यादात्वेन। तस्मात् प्राकृतं ज्योतिरिह ग्राह्यमित्येवं प्राप्ते ब्रूमः ज्योतिरिह ब्रह्म ग्राह्यम्। कुतः, चरणाभिधानात्, पादाभिधानादित्यर्थः। पूर्वस्मिन् हि वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टं—"तावानस्य महिमा ततो ज्यायांश्च पुरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यनेन

प्रत्यभिज्ञेत्यर्थः। प्रकृतेर्जातं प्राकृतं कार्यमित्यर्थः। आचारं निरस्यति॥ पादेति॥ गायत्री वा इदं सर्वं भूतं वाग्वै गायत्री येयं पृथिवी यदिदं शरीरं यदस्मिन् पुरुषे हृदयमिमे प्राणा इति भूतवाक्पृथिवीशरीरहृदयप्राणात्मिका षड्विधा षड्भिरक्षरैश्चतुष्पदा गायत्रीति। यदुक्तं तावान् तत्परिमाणः सर्वः प्रपञ्चोऽस्य गायत्र्यनुगतस्य ब्रह्मणो महिमा विभूतिः, पुरुषस्तु पूर्णब्रह्मरूपः, अतः प्रपञ्चाज्ज्यायानधिकः। आधिक्यमेवाह॥ पाद इति॥ सर्वं जगदेकः पादोंऽशः "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति स्मृतेः। अस्य पुरुषस्य दिवि स्वप्रकाशस्वरूपे त्रिपादमृतरूपमस्ति, दिवि सूर्यमण्डले वा ध्यानार्थमस्ति, कल्पिताज्जगतो ब्रह्मस्वरूपमनन्तमस्तीत्यर्थः। यथा लोके पादात् पादत्रयमधिकं तथेदमधिकमिति बोधनार्थं त्रिपादमृतमित्युक्तं न त्रिपात्त्वं विवक्षितमिति मन्तव्यं। यदतः पर इति यच्छब्दस्य प्रसिद्धार्थवाचित्वात् पूर्ववा-

मन्त्रेण। तत्र यश्चतुष्पदो ब्रह्मणस्त्रिपादमृतं द्युसम्बन्धिरूपं निर्दिष्टं तदेवेह द्युसम्बन्धात् निर्दिष्टमिति प्रत्यभिज्ञायते। तत् परित्यज्य प्राकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम्। न केवलं ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः; परस्यामपि हि शाण्डिल्यविद्यायामनुवर्तिष्यते ब्रह्म। तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम्। यत्तूक्तं "ज्योतिर्दीप्यते" इति च एतौ शब्दौ कार्ये ज्योतिषि प्रसिद्धाविति, नायं दोषः, प्रकरणात्। ब्रह्मावगमे सत्यनयोः शब्दयोरविशेषकत्वात्। दीप्यमानकार्यज्योतिरुपलक्षिते ब्रह्मण्यपि प्रयोगसम्भवात्। "येन सूर्यस्त-

क्यप्रसिद्धं ब्रह्म ग्राह्यमित्याह ॥ तत्रेति ॥ ननु यदाग्नेयोऽष्टाकपाल इत्यत्र यत्पदस्याप्रकृतार्थकत्वं दृष्टमित्यत आह ॥ तत्परित्यज्येति ॥ तत्र यागस्यान्यतः प्रसिद्धेरभावेनापूर्वत्वादगत्या यदोऽप्रसिद्धार्थत्वमाश्रितं, इह तु पूर्ववाक्यप्रसिद्धस्य ब्रह्मणो द्युसम्बन्धेन प्रत्यभिज्ञातस्य यदर्थत्वनिश्चयाद्यत्पदैकार्थकज्योतिःपदस्यापि स एवार्थ इत्यर्थः। सन्दंशन्यायादप्येवमित्याह ॥ न केवलमिति ॥ सर्वं खल्विदं ब्रह्मेत्युत्तरत्र ब्रह्मानुवृत्तेर्मध्यस्थं ज्योतिर्वाक्यं ब्रह्मपरमित्यर्थः ॥ प्रकरणादिति ॥ प्रकृतापेक्षयत्पदश्रुत्या द्युसम्बन्धभूतपादत्वादिलिङ्गैश्चेत्यर्थः । अतः प्रकरणाज्ज्योतिःश्रुतिबाधो न युक्त इति निरस्तं ॥ अविशेषत्वादिति ॥ ब्रह्मव्यावर्तकत्वाभावादित्यर्थः। येन तेजसा चैतन्येनेद्धः प्रकाशितः सूर्यस्तपति प्रकाशयति तं बृहन्तमवेद-

पति तेजसेद्धः" इति च मन्त्रवर्णात्। यद्वा नायं ज्योतिःशब्दश्चक्षुर्वृत्तेरेवानुग्राहके तेजसि वर्तते। अन्यत्रापि प्रयोगदर्शनात् "वाचैवायं ज्योतिषाऽऽस्ते मनो ज्योतिर्जुषताम्" इति च। तस्माद्यद्यत् कस्यचिदवभासकं तत्तज्ज्योतिःशब्देनाभिधीयते। तथा सति ब्रह्मणोऽपि चैतन्यरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिःशब्दः। "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इत्यादिश्रुतिभ्यश्च। यदप्युक्तं द्युमर्यादत्वं सर्वगतस्य ब्रह्मणो नोपपद्यत इति, अत्रोच्यते, सर्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते। ननूक्तं निष्प्रदेशस्य ब्रह्मणः प्रदेशविशेषकल्पना नोपपद्यत इ-

विन्न मनुत इत्यर्थः। ज्योतिःशब्दस्य कार्यज्योतिष्येव शक्तिरित्यङ्गीकृत्य कारणब्रह्मलक्षकत्वमुक्त्वा ब्रह्मण्यपि शक्तिमाह ॥ यद्वेति ॥ गाढान्धकारे वाचैव ज्योतिषा लोक आसनादिव्यवहारं करोतीत्यर्थः। "आज्यं जुषतां पिबतां मनो ज्योतिःप्रकाशकं भवति" इत्याज्यस्तुतिः। यथा गच्छन्तमनुगच्छतः स्वस्यापि गतिरस्ति तथा सर्वस्य स्वनिष्ठं भानं स्यादित्यत आह ॥ तस्य भासेति ॥ तत्कालानवच्छिन्नं ब्रह्म सूर्यादिज्योतिषां साक्षिभूतमायुरमृतमिति च देवा उपासत इत्यर्थः। ज्योतिषोऽग्नित्ववत् द्युमर्यादत्वादिकं ध्यानार्थं कल्पितं ब्रह्म-

ति। नायं दोषः, निष्प्रदेशस्यापि ब्रह्मण उपाधिविशेषसम्बन्धात् प्रदेशविशेषकल्पनोपपत्तेः। तथा ह्यादित्ये चक्षुषि हृदये इति प्रदेशविशेषसम्बन्धीनि ब्रह्मण उपासनानि श्रूयन्ते, एतेन विश्वतः पृष्ठेष्वित्याधारबहुत्वमुपपादितम्। यदप्येतदुक्तम् औष्ण्यघोषाभ्यामनुमिते कौक्षेये कार्ये ज्योतिष्यध्यस्यमानत्वात् परमपि दिवः कार्यं ज्योतिरेवेति तदप्ययुक्तम्, परस्यापि ब्रह्मणो नामादिप्रतीकत्ववत् कौक्षेयज्योतिःप्रतीकत्वोपपत्तेः। "दृष्टञ्च श्रुतञ्च इत्युपासीत" इति तु प्रतीकद्वारकं दृष्टत्वं श्रुतत्वं च भविष्यति। यदप्यल्पफलश्रवणान्न ब्रह्मेति तदप्यनुपपन्नम्। न हि इयते फलाय ब्रह्माश्रयणीयमियते नेति नियमे हेतुरस्ति। यत्र हि निरस्तसर्वविशेषसम्बन्धं परं ब्रह्मात्मत्वेनोपदिश्यते, तत्रैकरूपमेव फलं मोक्ष इत्यवगम्यते। यत्र तु गुणविशेषसम्बन्धं प्रती-

णो युक्तमित्याह ॥ अत्रोच्यते इत्यादिना ॥ दिवः परमित्यन्वयः, आरोप्यस्य ध्येयस्यालम्बनस्य च सादृश्यनियमो नास्तीत्याह ॥ **परस्यापीति** ॥ भविष्यति ब्रह्म ज्योतिष इति शेषः। तं यथा यथोपासते तथा फलं भवतीति श्रुतेरित्याह ॥ **न हीयत इति** ॥ ज्ञानफलवदुपास्तिफलमेकरूपं किं न स्यादत आह॥ **यत्र हीति**॥ ज्ञेयैकत्वादित्यर्थः। ध्येयं तु नाऽनेत्याह ॥ **यत्र त्विति** ॥ ईश्वरो जीवरूपेणान्नमत्तीत्य-

कविशेषसम्बन्धं वा ब्रह्मोपदिश्यते तत्र संसारगोचराण्येवोच्चावचानि फलानि दृश्यन्ते "अन्नादो वसुदानो विन्दते वसु य एवं वेद" इत्याद्यासु श्रुतिषु। यद्यपि न स्ववाक्ये किञ्चिज्ज्योतिषो ब्रह्मलिङ्गमस्ति तथापि पूर्वस्मिन् वाक्ये दृश्यमानं गृहीतव्यं भवति। तदुक्तं सूत्रकारेण ज्योतिश्चरणाभिधानादिति। कथं पुनः वाक्यान्तरगतेन ब्रह्मसन्निधानेन ज्योतिःश्रुतिः स्वविषयात् प्रच्याव्य शक्या व्यावर्तयितुम्। नैष दोषः। "यदतः परो दिवो ज्योतिः" इति प्रथमतरपठितेन यच्छब्देन सर्वनाम्ना द्युसम्बन्धात् प्रत्यभिज्ञायमाने पूर्ववाक्यनिर्दिष्टे ब्रह्मणि स्वसामर्थ्येन परामृष्टे सति अर्थाज्ज्योतिःशब्दस्यापि ब्रह्मविषयत्वोपपत्तेः। तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम्॥ २४॥

न्नादः, अन्नस्यासमन्ताद्दाता वा। वसु हिरण्यं ददातीति वसुदान इति गुणविशेषसम्बन्धं यो वेद स धनं विन्दते दीप्ताग्निश्च भवति नाम्नो वागुत्तमा मनो वा प्रतीकं वाचो भूय इति प्रतीकविशेषध्यानश्रुतिसंग्रहार्थमाद्यपदं सन्निधेः श्रुतिर्बलीयसीति शङ्कते॥ कथं पुनरिति॥अथ प्रथमश्रुत्यनुसारेण चरमश्रुतिर्नीयत इत्याह॥नैष इति॥सर्वनाम्ना स्वसामर्थ्येन स्वस्य सर्वनाम्नः सामर्थ्यं सन्निहितवाचित्वं तद्बलेन परामृष्टे सतीति योजना। अर्थाद्यत्पदसामानाधिकरण्यादित्यर्थः। छन्दोऽभिधानाद्ब-

## छन्दोऽभिधानान्नेति चेन्न तथा चेतो-ऽर्पणनिगदात्तथाहि दर्शनम् ॥२५॥

अथ यदुक्तं पूर्वस्मिन्नपि वाक्ये न ब्रह्माभिहितमस्ति "गायत्री वा इदं सर्वं भूतं यदिदं किञ्च" इति गायत्र्याख्यस्य छन्दसोऽभिहितत्वादिति तत् परिहर्तव्यम्। पुनश्छन्दोऽभिधानान्न ब्रह्माभिहितमिति शक्यते वक्तुं, यावता "तावानस्य महिमा" इत्येतस्यामृचि चतुष्पाद्ब्रह्म दर्शितं। नैतदस्ति। "गायत्री वा इदं सर्वं" इति गायत्रीमुपक्रम्य तामेव भूतपृथिवीशरीरहृदयवाक्प्राणप्रभेदैर्व्याख्याय "सैषा चतुष्पदा षड्विधा गायत्री"-तदेतदृचाभ्यनूक्तं-"तावानस्य महिमा" इति तस्यामेव व्याख्यातरूपायां गायत्र्यामुदाहृतो मंत्रः कथमेकस्माद्ब्रह्मचतुष्पादभिदध्यात्। योऽपि तत्र "यद्वै तत् ब्रह्म" इति ब्रह्मशब्दः, सोऽपि छन्दसः प्रकृतत्वात् छन्दोविषय एव। "य एतामेवं ब्रह्मोपनिषदं वेद" इत्यत्र हि

ह्म प्रकृतं नास्तीति शङ्कामेकदेशी दूषयति ॥कथमिति॥ शंकां साधयति ॥ नैतदित्यादिना॥ चतुष्पदत्वादिकं पूर्वमेव व्याख्यातं ॥ य एतामेवमिति ॥ वेदरहस्यभूतां मधुविद्यामेवमुक्तरीत्या यः कश्चिद्वेद तस्योदयास्तमयरहितब्रह्मप्राप्तिर्भवतीत्यर्थः। तथा च वेदत्वात् गायत्र्यां

वेदोपनिषदमिति व्याचक्षते। तस्माच्छन्दोऽभिधानान्न ब्रह्मणः प्रकृतत्वमिति चेत्। नैष दोषः। तथा चेतोऽर्पणनिगदात्; तथा गायत्र्याख्यच्छन्दोद्वारेण तदनुगते ब्रह्मणि चेतसोऽर्पणं चित्तसमाधानमनेन ब्राह्मणवाक्येन निगद्यते "गायत्री वा इदं सर्वं" इति। न ह्यक्षरसन्निवेशमात्रायां गायत्र्याः सर्वात्मकत्वं सम्भवति। तस्माद्यद्गायत्र्याख्यविकारेऽनुगतं जगत्कारणं ब्रह्म निर्दिष्टं, तदिह "सर्वं" इत्युच्यते। यथा "सर्वं खल्विदं ब्रह्म" इति। कार्यञ्च कारणादव्यतिरिक्तमिति वक्ष्यामः।-"तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र, तथान्यत्रापि विकारद्वारेण ब्रह्मण उपासनं दृश्यते-"एतं ह्येव बह्वृचा महत्युक्थे मीमां-

ब्रह्मशब्दो युक्त इति भावः॥ गायत्रीशब्देन तदुपादानत्वेनानुगतब्रह्मलक्षणायां बीजमनुपपत्तिमाह ॥ न ह्यक्षरेति ॥ ब्रह्मणोऽपि कथं सर्वात्मकत्वं तत्राह॥ कार्यञ्चेति ॥ न च गायत्र्या ध्यानार्थं सर्वात्मकत्वारोप इति वाच्यं स्वतः सर्वात्मनो ध्यानसम्भवेनासदारोपायोगादिति भावः। तथा हि दर्शनमिति सूत्रशेषं व्याचष्टे ॥ तथान्यत्रेति ॥ दृश्यत इति दर्शनं दृष्टमित्यर्थः। एतं परमात्मानं बह्वृचा ऋग्वेदिनो महत्युक्थे शस्त्रे तदनुगतमुपासते। एतमेवाग्निरहस्ये तमेतमग्निरित्यध्वर्यव उपासत इति श्रुतेः यजुर्वेदिनोऽग्नौ उपासते। एतमेव छान्दोगाः सामवेदिनो महाव्रते क्रतौ उपासते, इति तैत्तिरीयके दृष्टमित्यर्थः। गायत्रीशब्दो ब्रह्मलक्षक इति व्याख्याय गौण इत्या-

सन्तं एतमग्नावध्वर्यवं एतं महाव्रते छन्दोगाः" इति। तस्मादस्ति छन्दोऽभिधानेऽपि पूर्वस्मिन् वाक्ये चतुष्पाद् ब्रह्म निर्दिष्टं, तदेव ज्योतिर्वाक्येऽपि परामृश्यते, उपासनान्तरविधानाय। अपर आह साक्षादेव गायत्रीशब्देन ब्रह्म प्रतिपाद्यते संख्यासामान्यात् यथा गायत्री चतुष्पदा षडक्षरैः पादैस्तथा ब्रह्म चतुष्पात्। तथाऽन्यत्रापि छन्दोऽभिधायी शब्दोऽर्थान्तरे संख्यासामान्यात् प्रयुज्यमानो दृश्यते। तद्यथा "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः तत्कृतं" इत्युपक्र-

ह॥ अपर इति॥ साक्षादेव वाच्यार्थग्रहणं विनैवेति यावत् पूर्वं तूपास्यतया गायत्रीपदेनाजहल्लक्षणया गायत्री ब्रह्मणी द्वे अपि लक्षिते। न च गायत्री सर्वमित्यन्वयासम्भवः। घटो रूपीति पदार्थैकदेशे व्यक्तौ रूपान्वयवत् गायत्रीपदार्थैकदेशे गायत्र्यनुगते ब्रह्मणि प्रधाने सर्वात्मकत्वान्वयसम्भवादितिभावः। तथा च सूत्रे सिद्धान्तभागस्यायमर्थः। तथा गायत्रीवच्चतुष्पात्त्वगुणसामान्याच्चेतो ब्रह्मणि समर्प्यते येन स चेतोऽर्पणो गायत्रीशब्दस्तेन ब्रह्मण एव निगदात्, अभिधानात्, छन्दोऽभिधानमसिद्धमिति। अधुना तथा हि दर्शनमिति शेषं व्याचष्टे॥ तथेति॥ संवर्गविद्यायामधिदैवमग्निसूर्यचन्द्राम्भांसि वायौ लीयन्ते। अध्यात्मं वाक्चक्षुःश्रोत्रमनांसि प्राणमपि यन्तीत्युक्तं ते वा एते पञ्चान्ये आधिदैविकाः, पञ्चान्ये आध्यात्मिकास्ते मिलित्वा दशसंख्याकाः सन्तः कृतमित्युच्यन्ते। सन्ति हि कृतत्रेताद्वापरकलिसंज्ञकानि चत्वारि द्यूतानि क्रमेण चतुरङ्कत्र्यङ्कद्व्यङ्कैकाङ्कानि त-

म्याह "सैषा विराडन्नादिनी" इति। अस्मिन् प-
क्षे ब्रह्मैवाभिहितमिति न छन्दोऽभिधानं सर्वथा-
ऽप्यस्ति पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्म ॥ २५ ॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् २६ ॥

इतश्चैवमभ्युपगन्तव्यमस्ति पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्मेति- यतो भूतादीन् पादान् व्यपदिशति । भूतपृथिवीशरीरहृदयादीनि हि निर्दिश्याह "सैषा चतुष्पदा षड्विधा गायत्री" इति । न हि ब्रह्मानाश्रयणे केवलस्य छन्दसो भूतादयः पादा उपपद्यन्ते। अपि च ब्रह्मानाश्रयणे नेयमृक् सम्बध्येत "तावानस्य महिमा" इति। अनया हि ऋचा स्वरसेन ब्रह्मैवाभिधीय-

त्र कृतं दशात्मकं भवति चतुर्ष्वङ्केषु त्रयाणां त्रिषु द्वयोर्द्वयोरेकस्य चान्तर्भावात्, तथा च दशत्वगुणेन वाय्वादयः कृतशब्देनोच्यन्ते । एवं कृतत्वं वाय्वादीनामुपक्रम्याह ॥ सैषेति ॥ विधेयापेक्षया स्त्रीलिङ्गनिर्देशः, विराट्पदं छन्दोवाचकं "दशाक्षरा विराट्" इतिश्रुतेः दशत्वसाम्येन वाय्वादयो विराडित्युच्यन्ते । एवञ्च दशत्वद्वारा वाय्वादिषु कृतत्वं विराट्त्वञ्च ध्येयं, तत्र विराट्त्वध्यानात् सर्वमस्यान्नं भवति "अन्नं विराट्" इति श्रुतेः कृतत्वध्यानादन्नादो भवति कृतद्यूतस्यान्नादत्वात् । कृतं हि स्वीयचतुरङ्केषु त्र्यङ्कादिकमन्तर्भावयदन्नमत्तीव लक्ष्यते । अत एव कृतजयादितरद्यूतजयः श्रुत्युक्तः । कृताय विजिताधरेयाः संयन्तीति, अथो द्यूतं कृतसंज्ञोऽयः कृतायः स विजितो येन तस्मै, अधरेयाः त्र्यंकादयः अयाः संयन्ति उपनमन्ते तेन

ते "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति सर्वात्मत्वोपपत्तेः। पुरुषसूक्तेऽपीयमृक् ब्रह्मपरतयैव समाम्नायते। स्मृतिश्च ब्रह्मण एवं रूपतां दर्शयति "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति "यद्वै तद्ब्रह्म" इति च निर्देशः। एवं सति मुख्यार्थ उपपद्यते। "ते वा

जिता भवन्तीत्यर्थः। एवञ्च सा वाय्वादिदशात्मिका एषा कृतशब्दिता विराडन्नं कृतत्वादन्नादिनीत्यर्थः॥ **सर्वथापीति**॥ गायत्रीति पदस्य लक्षकत्वे गौणत्वेऽपि चेत्यर्थः। अत्रापर आहेत्यपरपदेन गौणत्वं स्वमतं नेति द्योतयति। अजहल्लक्षणापक्षे हि वाग्वै गायत्रीति वागात्मत्वं गायति च त्रायते चेति निरुक्तनामकञ्च गायत्र्या उपाधित्वेनोपास्यत्वादुपपन्नतरं गौणपक्षे गायत्रीत्यागात्तदुभयं सर्वात्मकत्वमात्रेणोपपादनीयं, एवं गायत्रीपदस्य स्वार्थत्यागोऽप्रसिद्धचतुष्पात्त्वगुणद्वारा विप्रकृष्टलक्षणा चेति बह्वसमञ्जसम्। ननु "गायत्री वा इदं सर्वं" इति प्रथमगायत्रीश्रुतेः कथं लक्षणेत्याशङ्क्य वाक्यशेषगतसर्वात्मकत्वाद्यनेकबलवत् प्रमाणसंवादेन ब्रह्मणि तात्पर्यावगमादित्याह॥ **भूतादिपादेति**॥ पदार्थमाह॥ **इतश्चेति**॥ सूत्रस्थादिपदार्थं दर्शयति॥ **भूतपृथिवीति**॥ अत्र सूत्रभाष्यकारयोर्भूतादिभिश्चतुष्पदा गायत्रीति सम्मतं षडक्षरैश्चतुष्पात्त्वं वृत्तिकारोक्तप्रसिद्धं चकारसूचितं युक्त्यन्तरमाह॥ **अपि चेति**॥ ब्रह्मपरसूक्तोत्पन्नत्वाच्च तस्यास्तत्परत्वमित्याह॥ **पुरुषेति**॥ ब्रह्मपदस्य छन्दवाचित्वमुक्तं निरस्यति॥ **यद्वै तत् ब्रह्मेति**॥ पूर्वस्यामृचि ब्रह्मोक्तावित्यर्थः' हृदयस्य चतुर्दिक्षूर्ध्वं च पञ्चसुषयः सन्ति तेषु ब्रह्मस्थानहृन्नगरस्य प्रागादिद्वारेषु क्रमेण प्राणव्यानापानसमानोदानाः पञ्च

एते पञ्च ब्रह्मपुरुषाः" इति च - हृदयसुषिषु ब्र-ह्मपुरुषः- इति श्रुतिः ब्रह्मसम्बन्धितायां विव-क्षितायां सम्भवति। तस्मादस्ति पूर्वस्मिन् वा-क्ये प्रकृतं ब्रह्म। तदेव ब्रह्म ज्योतिर्वाक्ये द्युस-म्बन्धात् प्रत्यभिज्ञायमानं परामृश्यत इति स्थि-तम् ॥ २६ ॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्य-विरोधात् ॥ २७ ॥

यदप्येतदुक्तं पूर्वत्र "त्रिपादस्यामृतं दिवी"ति सप्तम्या द्यौराधारत्वेनोपदिष्टा, इह पुनरथ यद-तः परो दिव इति पञ्चम्या मर्यादात्वेन तस्मादु-पदेशभेदात् न तस्येह प्रत्यभिज्ञानमस्तीति तत् परिहर्तव्यं। अत्रोच्यते, नायं दोष उभयस्मिन्न-

द्वारपाला इति ध्यानार्थं श्रुत्या कल्पितं । तत्र हृदयच्छिद्रस्थप्राणेषु ब्रह्मपुरुषत्वश्रुतिर्हृदि गायत्र्याख्यब्रह्मण उपासनासम्बन्धितायां ब्र-ह्मणा द्वारपालत्वाद्ब्रह्मपुरुषा इति सम्भवतीत्याह ॥ **पञ्च ब्रह्मेति** ॥ दिवि दिव इति विभक्तिभेदात् प्रकृतप्रत्यभिज्ञा नास्तीत्युक्तं नोपेक्षणी-यमित्याह ॥ **तत्परिहर्तव्यमिति**॥परिहारं प्रतिजानीते॥**अत्रेति** ॥ सूत्रे नञर्थं वदन् परिहारमाह ॥ **नायमिति** ॥ एवं सर्वत्र व्याख्येयं । प्रधान-प्रातिपदिकार्थाद् द्युसम्बन्धेन प्रत्यभिज्ञाया विभक्त्यर्थभेदो न प्रतिब-न्धकः, कथञ्चिदाधारस्यापि मर्यादात्वसम्भवात् । यथा वृक्षाग्रं स्वलग्न-भागावच्छिन्नश्येनस्याधारः सन्नेव स्वालग्नभागावच्छिन्नस्य तस्यैव

प्यविरोधात्, उभयस्मिन्नपि सप्तम्यन्ते पञ्चम्यन्ते चोपदेशेन प्रत्यभिज्ञानं विरुध्यते। यथा लोके वृक्षाग्रे सम्बद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते, वृक्षाग्रे श्येनो वृक्षाग्रात् परतः श्येन इति च, एवं दिव्येव सत् ब्रह्म दिवः परमित्युपदिश्यते। अपर आह यथा लोके वृक्षाग्रेणासम्बद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते वृक्षाग्रे श्येनो वृक्षाग्रात् परतः श्येन इति च, एवं च दिवः परमपि सत् ब्रह्म दिवीत्युपदिश्यते। तस्मादस्ति पूर्वनिर्दिष्टस्य ब्रह्मण इह प्रत्यभिज्ञानं। अतः परमेव ब्रह्म ज्योतिःशब्दमिति सिद्धं॥ २७॥

## प्राणस्तथानुगमात्॥ २८॥

अस्ति कौषीतकिब्राह्मणोपनिषदीन्द्रप्रत-

मर्यादा भवति, एवं दिवि सूर्ये हार्दाकाशे वा मुख्ये आधारे सद् ब्रह्म दिवो मर्यादत्वं तदलग्नाकाशावच्छिन्नं ब्रह्म प्रति कल्पयित्वा दिवः परमित्युच्यत इत्यर्थः। यद्याकाशेन अनवच्छिन्नं ब्रह्म गृहीत्वा पञ्चम्या दिवो मर्यादात्वमेव मुख्यं तदा गङ्गायां घोष इतिवत् सप्तम्या सामीप्यलक्षणयाऽऽधारत्वं व्याख्येयमित्याह॥ **अपर इति**॥ सम्बद्धं प्रत्याधारत्वं मुख्यं पूर्वमुक्तं दिव्येव सदिति असम्बद्धं प्रति मर्यादात्वं मुख्यमधुनोच्यते। दिवः परमपीति भेदः। तस्माज्ज्योतिर्वाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धम्॥ २७॥ **प्राणस्तथानुगमात्**॥ दिवोदासस्यापत्यं दैवोदासिः प्रतर्दनो नाम राजा युद्धेन पुरुषका-

र्दनाख्यायिकां "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्याम्नाता। तस्यां श्रूयते "स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इति, तथोत्तरत्रापि "अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति" इति, तथा "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादि, अन्ते च "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः" इत्यादि। तत्र संशयः, किमिह प्राणशब्देन वायुमात्रमभिधीयते, उत देवतात्मा, उत जीवः, अथवा परं ब्रह्मेति। नन्वत एव प्राण इत्यत्र वर्णितं प्राणशब्दस्य ब्रह्मपरत्वमिहापि च ब्रह्मलिङ्गमस्ति "आनन्दोऽजरोऽमृतः" इत्यादि कथमिह पुनः संशयः सम्भवति। अनेकलिङ्गदर्श-

रेण च कारणेनेन्द्रस्य प्रेमास्पदं गृहं जगाम तं ह इन्द्र उवाच. प्रतर्दन वरं ते ददामीति स होवाच प्रतर्दनः, यं त्वं मर्त्याय हिततमं मन्यसे तं वरं त्वमेवालोच्य मह्यं देहीति नत इन्द्र इदमाह प्राणोऽस्मीत्यादि मुख्यं प्राणं निरसितुं प्रज्ञात्मत्वमुक्तं निर्विशेषचिन्मात्रं निरस्यति ॥ तं मामिति ॥ इदं प्राणस्येन्द्रदेवतात्वे लिङ्गम्। मुख्यप्राणत्वे लिङ्गमाह ॥ अथेति ॥ वागादीनां देहधारणशक्त्यभावनिश्चयानन्तरमित्यर्थः। प्राणस्य देहधारकत्वमुत्थापकत्वञ्च प्रसिद्धमिति वक्तुं खल्वित्युक्तं। प्राणस्य जीवत्वे वक्तृत्वं लिङ्गमाह॥ न वाचमिति॥ आनन्दत्वादिकं ब्रह्मलिङ्गमाह॥ अन्ते चेति ॥ अनेकेषु लिङ्गेषु दृश्यमानेषु

नादिति ब्रूमः। न केवलमिह ब्रह्मलिङ्गमेवोपलभ्यते सन्ति हि इतरलिङ्गान्यपि। "मामेव विजानीहि" इतीन्द्रस्य वचनं देवतात्मलिङ्गम् 'इदं शरीरं परिगृह्योत्थापयतीति प्राणलिङ्गम्। "न वाचं विजिज्ञासीत वक्तारं विद्यादि" त्यादि जीवलिङ्गं, अत उपपन्नः संशयः। तत्र प्रसिद्धो वायुः प्राण इति प्राप्ते, उच्यते, प्राणशब्दवाच्यं ब्रह्म विज्ञेयं। कुतः। तथानुगमात्। तथा हि पौर्वापर्येण पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते, उपक्रमे तावत् वरं वृणीष्वेतीन्द्रेणोक्तः प्रतर्दनः परमपुरुषार्थं वरमुपचिक्षेप "त्वमेव मे वृणी-

बलाबलनिर्णयार्थमिदमधिकरणमित्यगतार्थमाह ॥ अनेकलिङ्गेति ॥ पूर्वत्र प्रकृतब्रह्मवाचकयच्छब्दबलाज्ज्योतिःश्रुतिः ब्रह्मपरेत्युक्तं, न तथेह प्राणश्रुतिभङ्गे किञ्चिद्बलमस्ति। मिथो विरुद्धानेकलिङ्गानामनिश्चायकत्वादिति प्रत्युदाहरणसङ्गत्या पूर्वपक्षयति ॥ तत्रेति ॥ पूर्वं प्रधानप्रातिपदिकार्थबलात् विभक्त्यर्थबाधवद्वाक्यार्थज्ञानं प्रति हेतुत्वेन प्रधानानेकपदार्थबलादेकवाक्यताभङ्ग इति दृष्टान्तसङ्गतिर्वाऽस्तु। पूर्वपक्षे प्राणाद्यनेकोपास्तिः, सिद्धान्ते प्रत्यग्ब्रह्मधीरिति विवेकः। तथा ब्रह्मपरत्वेन पदानामन्वयावगमादिति हेत्वर्थमाह ॥ तथा हीति ॥ हिततमत्वकर्मक्षयादिपदार्थानां सम्बन्धो ब्रह्मणि तात्पर्यनिश्चायक उपलभ्यत इत्युक्तं विवृणोति ॥ उपक्रम इत्यादिना ॥ यं मन्यसे तं वरं त्वमेवं प्रयच्छेत्यर्थः। स यः कश्चित् मां ब्रह्मरूपं

ष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति। तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात्। न ह्यन्यत्र परमात्मज्ञानात् हिततमप्राप्तिरस्ति "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुतिभ्यः। तथा "स यो मां वेद न ह वै तस्य केनचन कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया" इत्यादि च ब्रह्मपरिग्रहे घटते, ब्रह्मविज्ञाने हि सर्वकर्मक्षयः प्रसिद्धः। "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्याद्यासु श्रुतिषु, प्रज्ञात्मत्वं च ब्रह्मपक्ष एवोपपद्यते। न ह्यचेतनस्य वायोः प्रज्ञात्मत्वं सम्भवति। तथोपसंहारेऽपि "आनन्दोऽजरोऽमृतः" इत्यानन्दत्वादीनि न ब्रह्मणोऽन्यत्र सम्यक् सम्भवन्ति "स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयानेष ह्येव साधु कर्म कारयति"- "तं यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु कर्म कारयति। तं यमेभ्यो लोकेभ्योऽधो निनीषते" इति "एष लोकपाल एष लोकाधिपतिरेष

वेद साक्षादनुभवति तस्य विदुषा लोको मोक्षो महताऽपि पातकेन न ह मीयते नैव हिंस्यते न प्रतिबध्यते ज्ञानाग्निना कर्मतूलराशेर्दग्धत्वादित्याह ॥ स य इति ॥ साध्वसाधुनी पुण्यपापे ताभ्यामस्पृष्टत्वं

लोकेशः” इति च । सर्वमेतत् परस्मिन् ब्रह्मण्या-श्रीयमाणे अनुगन्तुं शक्यते न मुख्ये प्राणे । तस्मात् प्राणो ब्रह्म ॥ २८ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २९ ॥

यदुक्तं प्राणो ब्रह्मेति तदाक्षिप्यते, न परं ब्रह्म प्राणशब्दम् । कस्मात्, वक्तुरात्मोपदेशात् । वक्ता हीन्द्रोनाम कश्चिद्विग्रहवान् देवताविशेषः स्वमात्मानं प्रतर्दनायाचचक्षे-“मामेव विजानीहि” इत्युपक्रम्य “प्राणोऽस्मि प्रज्ञात्मा” इत्यहङ्कारवादेन स एष वक्तुरात्मत्वेनोपदिश्यमानः प्राणः कथं ब्रह्म स्यात् । न हि ब्रह्मणो वक्तृत्वं सम्भवति “अवागमनाः” इत्यादिश्रुतिभ्यः । तथा विग्रहसम्बन्धिभिरेव ब्रह्मण्यसम्भवद्भिर्धर्मैरात्मानं तुष्टाव “त्रिशीर्षाणं त्वाष्ट्रमहनं, अरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छम्” इत्येव-

तत्कारयितृत्वं निरङ्कुशैश्वर्यं च सर्वमेतदित्यर्थः ॥ २८ ॥ अहङ्कारवादेन स्वात्मवाचकशब्दैराचचक्षे, उक्तवान् इत्यर्थः । वाक्यस्य इन्द्रोपासनापरत्वे लिङ्गान्तरमाह ॥ तथा विग्रहेति ॥ त्रीणि शीर्षाणि यस्येति त्रिशीर्षा त्वष्टुः पुत्रोः विश्वरूपोनाम ब्राह्मणः तं हतवानस्मि । रौति यथार्थं शब्दयतीति रुत् वेदान्तवाक्यं तन्मुखे येषां ते रुङ्मुखा-

दिभिः। प्राणत्वं चेन्द्रस्य बलवत्त्वादुपपद्यते, "प्राणो वै बलम्" इति हि विज्ञायते बलस्य चेन्द्रो देवता प्रसिद्धा। या च काचन बलकृतिरिन्द्रकर्मैव तदिति हि पठन्ति। प्रज्ञात्मत्वमप्यप्रतिहतज्ञानत्वाद्देवतात्मनः सम्भवति, अप्रतिहतज्ञाना देवता इति हि वदन्ति। निश्चिते चैवं देवतात्मोपदेशे हिततमत्वादिवचनानि यथासम्भवं तद्विषयाण्येव योजयितव्यानि। तस्माद्वक्तुरिन्द्रस्यात्मोपदेशान्न प्राणो ब्रह्मेत्याक्षिप्य प्रतिसमाधीयते। अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति। अध्यात्मसम्बन्धः-प्रत्यगात्मसम्बन्धस्तस्य भूमा- बाहुल्यमस्मिन्नध्याय उपलभ्यते। "यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः"

स्तेभ्योऽन्यान् वेदान्तबहिर्मुखान् यतीनरण्यश्वभ्यो दत्तवानस्मीत्यर्थः। इन्द्रे प्राणशब्दोपपत्तिमाह ॥ प्राणत्वं चेति ॥ पठन्ति लौकिका अपीत्यर्थः। बलेवाचिना प्राणशब्देन बलदेवता लक्ष्यत इति भावः। इन्द्रो हितप्रदातृत्वाद्धिततमः कर्मानधिकारादपाप इत्येवं व्याख्येयानीत्याह ॥ निश्चिते चेति ॥ किमिन्द्रपदेन विग्रहोपलक्षितं चिन्मात्रमुच्यते उत विग्रहः। आद्ये वाक्यस्य ब्रह्मपरत्वं सिद्धं, न द्वितीय इत्याह ॥ अध्यात्मेति ॥ आत्मनि देहेऽधिगतं इत्यध्यात्मं प्रत्यगात्मा स सम्बध्यते यैः शरीरस्थत्वादिभिरिन्द्रतनावसम्भावितैर्धर्मैस्ते अध्यात्मसम्बन्धास्तेषां भूमेत्यर्थः। आयुरत्र देहे प्राणवायुसञ्चारः। अस्तित्वे प्राणस्थितौ प्राणानामिन्द्रियाणां स्थितिरित्यर्थतः श्रुतिमाह ॥ अ-

इति प्राणस्यैवं प्रज्ञात्मनः प्रत्यग्भूतस्यायुःप्रदानोपसंहारयोः स्वातन्त्र्यं दर्शयति न देवताविशेषस्य पराचीनस्य । तथाऽस्तित्वे च प्राणानां निःश्रेयसमित्यध्यात्ममेवेन्द्रियाश्रयं प्राणं दर्शयति । तथा "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति, "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इति चोपक्रम्य "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः" एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः" इति विषयेन्द्रियव्यवहारारैनभिभूतं प्रत्यगात्मानमेवोपसंहरति "स म आत्मेति विद्यात्" इति ।

स्तित्व इति ॥ अथातो निःश्रेयसादानमित्याद्या श्रुतिः । इन्द्रियस्थापकत्ववद्देहोत्थापकत्वमाह ॥ तथेति ॥ वक्तृत्वमुक्त्वा सर्वाधिष्ठानत्वं दर्शितमित्याह ॥ इति चोपक्रम्येति ॥ तत्तत्र नानाप्रपञ्चस्यात्मनि कल्पनायां यथा दृष्टान्तः लोके प्रसिद्धस्य रथस्यारेषु नेमिनाभ्योर्मध्यस्थशलाकासु चक्रोपान्तरूपा नेमिरर्पिता नाभौ चक्रपिण्डिकायामरा अर्पिता एवम्भूतानि पञ्च पृथिव्यादीनि मीयन्त इति मात्राः भोग्याः शब्दादयः पञ्चेति दशभूतमात्राः प्रज्ञामात्रासु दशस्वर्पिताः इन्द्रियजाः पञ्चशब्दादिविषयप्रज्ञाः । मीयन्ते आभिरिति मात्राः पञ्चधीन्द्रियाणि नेमिवत् ग्राह्यम् । ग्राहकेषु अरेषु कल्पितमित्युक्त्वा नाभिस्थानीये प्राणे सर्वं कल्पितमित्याह ॥ प्राणेऽर्पिता इति ॥ स प्राणो मम स्वरूपमित्याह ॥ स म इति ॥ तर्हि प्रत्यगात्मनि समन्वयो न

■ विद्यात्" इति चोपसंहारः प्रत्यगात्मपरिग्रहे साधुः न पराचीनपरिग्रहे। "अयमात्मा ब्रह्म सर्वानुभूः" इति च श्रुत्यन्तरं। तस्मादध्यात्मसम्बन्धबाहुल्यात् ब्रह्मोपदेश एवायं न देवतात्मोपदेशः॥ २९॥ कथं तर्हि वक्तुरात्मोपदेशः॥

**शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥ ३०**

इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेनाहमेव परं ब्रह्मेत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म मामेव विजानीहीति। यथा तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्चेति तद्वत्, "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" इति श्रुतेः। यत् पुनरुक्तं "मामेव विजानीहि" इत्युक्त्वा विग्रहधर्मैरिन्द्र आत्मानं तुष्टाव त्वाष्ट्रवधादिभिरिति तत्परिहर्तव्यं। अत्रोच्यते। न त्वाष्ट्रवधादीनां विज्ञेयेन्द्रस्तुत्यर्थत्वेनोपन्यासः,- यस्मादेवंकर्माहं तस्मान्मां विजानीहीति, कथं तर्हि;- विज्ञानस्तुत्यर्थ-

तु ब्रह्मणि। तत्राह॥ अयमिति॥ २९॥ अहङ्कारवादस्य गतिं पृच्छति॥ कथमिति॥ सूत्रमुत्तरं। तद्व्याख्याति॥ इन्द्र इति॥ जन्मान्तरकृतश्रवणादिना अस्मिन् जन्मनि स्वतःसिद्धं दर्शनमार्षं विज्ञेयेन्द्रस्तुत्यर्थ उपन्यासः न चेत् कथं तर्हि स इति पृच्छति॥ कथमिति॥

त्वेन । यत् कारणं त्वाष्ट्रवधादीनि साहसानि उपन्यस्य, परेण विज्ञानस्तुतिमनुसन्दधाति-"तस्य मे तत्र लोम च न मीयते स यो मां वेद न ह वै तस्य केन च कर्मणा लोको मीयते" इत्यादिना । एतदुक्तं भवति यस्मादीदृशान्यपि क्रूराणि कर्माणि कृतवतो मम ब्रह्मभूतस्य लोमापि न हिंस्यते स योऽन्योऽपि मां वेद न तस्य केनचिदपि कर्मणा लोको हिंस्यत इति । विज्ञेयं तु ब्रह्मैव, प्राणोऽस्मि प्रज्ञात्मेति वक्ष्यमाणं । तस्मात् ब्रह्मवाक्यमेतत् ॥ ३० ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ३१॥

यद्यप्याध्यात्मसम्बन्धभूमदर्शनान्न पराचीनस्य देवतात्मन उपदेशस्तथाऽपि न ब्रह्मवाक्यं भवितुमर्हति । कुतः । जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च । जीवस्य तावदस्मिन् वाक्ये विस्पष्टं लिङ्गमुपलभ्यते-"न वाचं विजिज्ञासीत

ब्रह्मज्ञानस्तुत्यर्थः स इत्याह ॥ विज्ञानेति ॥ नियामकं ब्रूते ॥ यदिति ॥ परेण तस्य मे इत्यादिना वाक्येनेत्यन्वयः । स्तुतिमाह ॥ एतदुक्तमिति ॥ तस्मात् ज्ञानं श्रेष्ठमिति शेषः । स्तुतज्ञानविषय इन्द्र इत्यत आह ॥ विज्ञेयं त्विति ॥ ३० ॥ देहोत्थापनं जीवलिङ्गं किं न

कमं प्रतिपद्यमानस्य कर्णपथमवतरति प्रत्यासीदतश्च मन्दत्वपटुत्वादिभेदं वर्णेष्वासञ्जयति तन्निबन्धनाश्चोदात्तादयो विशेषा न वर्णस्वरूपनिबन्धनाः। वर्णानां प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात्। एवं च सति सालम्बना उदात्तादिप्रत्यया भविष्यन्ति, इतरथा हि वर्णानां प्रत्यभिज्ञायमानानां निर्भेदत्वात् संयोगविभागकृता उदात्तादिभेदाः कल्पेरन्। संयोगविभागानां चाप्रत्यक्षत्वात् न तदाश्रया विशेषाः वर्णेष्वध्यवसितुं शक्यन्त इत्यतो निरालम्बना एवैते उदात्तादिप्रत्ययाः स्युः। अपि च नैवैतद-

त्वमन्दत्वादिधर्मान् स्वगतान् वर्णेषु स एवारोपयतीत्याह ॥ प्रत्यासीदतश्चेति ॥ आदिपदं विवृणोति ॥ तदिति ॥ नन्वव्यक्तवर्ण एव ध्वनिर्नातिरिक्त इत्यत आह ॥ वर्णानामिति ॥ प्रत्युच्चारणं वर्णा अनुवर्तन्ते ध्वनिर्वर्तत इति भेद इत्यर्थः। अन्यथाऽवाचिके जपे वर्णेषु अव्यक्तेषु ध्वनिबुद्धिः स्यात् दुन्दुभ्यादिध्वनौ शब्दत्वमात्रेण गृह्यमाणे अयमव्यक्तो वर्ण इति धीः स्यादिति मन्तव्यं एवं ध्वन्युपाधिकत्वे स्वमते गुणं वदन् वायूपाधिकत्वे पूर्वोक्तामरुचिं दर्शयति। ॥ एवं चेत्यादिना ॥ अस्तु को दोषस्तत्राह ॥ संयोगेति ॥ वायुसंयोगादेरश्रावणत्वादित्यर्थः। तस्मात् श्रावणध्वनिरेवोदात्तत्वाद्यारोपोपाधिरितिभावः। एवं विरुद्धधर्मकध्वनीनां भेदेऽपि न तेष्वनुगता वर्णा भिद्यन्त इत्युक्तं, तदेव दृष्टान्तेन द्रढयति ॥ अपि चेति ॥ यथा

१ ध्वनिः। २ संयोग विभागकृतो भेद इतिशेषः।

भिनिवेष्टव्यमुदात्तादिभेदेन वर्णानां प्रत्यभिज्ञायमानानां भेदो भवेदिति। न ह्यन्यस्य भेदेनान्यस्याभिद्यमानस्य भेदो भवितुमर्हति। नहि व्यक्तिभेदेन जातिं भिन्नां मन्यन्ते। वर्णेभ्यश्चार्थप्रतीतेः सम्भवात् स्फोटकल्पनानर्थिका। न कल्पयाम्यहं स्फोटं प्रत्यक्षमेव त्वेनमवगच्छामि। एकैकवर्णग्रहणाहितसंस्कारायां बुद्धौ झटिति प्रत्यवभासनादिति चेत्, न अस्या अपि बुद्धेर्वर्णविषयत्वात्, एकैकवर्णग्रहणोत्तरकालीना हीयमेका बुद्धिर्गौरिति समस्तवर्णविषया नार्थान्तरविषया। कथमेतदवगम्यते, यतोऽस्यामपि बुद्धौ गकारादयो वर्णा अनुवर्तन्ते न

खण्डमुण्डादिविरुद्धानेकव्यक्तिष्वभिन्नं गोत्वं तथा ध्वनिषु वर्णा अभिन्ना एवेत्यर्थः। उदात्तादिर्ध्वनिस्तद्भेदेन हेतुना वर्णानामपीति योजना प्रत्यभिज्ञाविरोधादित्यक्षरार्थः। यद्वा उदात्तत्वादिभेदविशिष्टतया प्रत्यभिज्ञायमानत्वात् वर्णानां भेद इत्याशङ्कां दृष्टान्तेन निरस्यति ॥ **अपि** चेति ॥ वर्णानां स्थायित्वं प्रसाध्य तेषामेव वाचकत्वं वक्तुं स्फोटं विघटयति ॥ **वर्णेभ्यश्चेति** ॥ कल्पनामसहमान आशङ्कते ॥ **नेति** ॥ चक्षुषा दर्पणयुक्तायां बुद्धौ मुखवत् श्रोत्रेण श्रवणयुक्तायां बुद्धौ विनैव हेत्वन्तरं स्फोटः प्रत्यक्ष इत्याह ॥ **झटितीति** ॥ यस्यां संविदि योऽर्थो भासते सा तत्र प्रमाणं एकपदमिति बुद्धौ वर्णा एव स्फुरन्ति नातिरिक्तस्फोटः प्रमाणमित्याह॥ **नास्या अपीत्यादिना** ॥ ननु गोपदबुद्धेः स्फोटो विषयो गकारादीनां तु व्यञ्जकत्वादनुवृत्तिरि-

तु दकारादयः । यदि त्वस्या बुद्धेर्गकारादिभ्योऽर्थान्तरं स्फोटो विषयः स्यात् ततो दकारादय इव गकारादयोऽप्यस्या बुद्धेर्व्यावर्तेरन्, न तु तथास्ति, तस्मादियमेकबुद्धिर्वर्णविषयैव स्मृतिः । नन्वनेकत्वाद्वर्णानां नैकबुद्धिविषयतोपपद्यत इत्युक्तं तत्प्रति ब्रूमः । सम्भवत्यनेकस्याप्येकबुद्धिविषयत्वम् । पङ्क्तिर्वनं सेना दश शतं सहस्रमित्यादिदर्शनात् । या तु गौरित्येकोऽयं शब्द इति बुद्धिः सा बहुष्वेव वर्णेषु एकार्थावच्छेदनिबन्धनौपचारिकी वनसेनादिबुद्धिवदेव । अत्राह, यदि वर्णा एव सामस्त्येनैकबुद्धिविषयतामाप-

त्यतआह ॥ यदिहीति ॥ व्यङ्ग्यवह्निबुद्धौ व्यञ्जकधूमानुवृत्तेरदर्शनादित्यर्थः । वर्णसमूहालम्बनत्वोपपत्तेर्न स्फोटः कल्पनीयः पदार्थान्तरकल्पनागौरवादित्याह ॥ तस्मादिति ॥ अनेकस्याप्यौपाधिकमेकत्वं युक्तमित्याह ॥ सम्भवतीति । ननु तत्रैकदेशादिरुपाधिरस्ति प्रकृते क उपाधिरित्यत आह ॥ या त्विति ॥ एकार्थे शक्तमेकं पदं प्रधानार्थे एकस्मिन् तात्पर्यवदेकं वाक्यमित्येकार्थसम्बन्धादेकत्वोपचार इत्यर्थः । न चैकपदत्वे ज्ञाते एकार्थज्ञानं, अस्मिन् ज्ञाते तदित्यन्योन्याश्रय इति वाच्यं । उत्तमवृद्धोक्तानां वर्णानां क्रमेणान्त्यवर्णश्रवणानन्तरं बालस्यैकस्मृत्यारूढानां मध्यमवृद्धस्य प्रवृत्त्यादिलिङ्गानुमितैकार्थधीहेतुत्वनिश्चये सत्येकपदवाक्यत्वनिश्चयात् । वर्णसाम्येऽपि पदभेददृष्टेर्वर्णातिरिक्तं पदं स्फोटाख्यमङ्गीकार्यमिति शङ्कते ॥ अत्रा-

१ पंक्तिवनसेनादौ । २ एकार्थे । ३ एकपदत्वज्ञानम् ।

द्यपानाः पदं स्युः ततो जारा राजा कपिः पिक इत्यादिषु पदविशेषप्रतिपत्तिर्न स्यात्, त एव हि वर्णा इतरत्र चेतर एव प्रत्यवभासन्त इति। अत्र वदामः। सत्यपि समस्तवर्णप्रत्यवमर्शे यथा क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धिमारोहन्त्येवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति, तत्र वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रतिपत्तिर्न विरुध्यते। वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसम्बन्धाः सन्तः स्वव्यवहारेऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना। स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च। वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्ज-

हेति॥ क्रमभेदाद्वर्णेष्वेव पदभेददृष्टिरिति परिहरति॥ अत्रेति॥ ननु नित्यविभूनां वर्णानां कथं क्रमः कथं वा पदत्वज्ञानेनार्थधीहेतुत्वं तत्राह॥ वृद्धेति॥ व्युत्पत्तिदशायामुच्चारणक्रमेण उपलब्धिक्रममनुपलभ्यमानवर्णेष्वारोप्यैते वर्णा एतत्क्रमैतत्सङ्ख्यावन्त एतदर्थशक्ता इति गृहीताः सन्तः श्रोतुः प्रवृत्तिकाले तथैव स्मृत्यारूढाः स्वस्वार्थं बोधयन्तीत्यर्थः। स्थायिवर्णवादमुपसंहरति॥ वर्णेति॥ दृष्टं वर्णानामर्थबोधकत्वं, अदृष्टः स्फोटः। सम्प्रति वर्णानामस्थिरत्वमङ्गी-

यन्ति, स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात्। अथापि नाम प्रत्युच्चारणमन्येऽन्ये च वर्णाः स्युस्तथापि प्रत्यभिज्ञालम्बनभावेन वर्णसामान्यानामवश्याभ्युपगम्यत्वात् या वर्णेष्वर्थप्रतिपादनप्रक्रिया रचिता सा सामान्येषु सञ्चारयितव्या, ततश्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धम्॥ २८॥

## अत एव च नित्यत्वम्॥ २९॥

स्वतन्त्रस्य कर्तुरस्मरणादिभिः स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य, अतः प्रभवादिति परिहृत्येदानीं तदेव वेदस्य नित्यत्वं स्थितं द्रढयति, अत एव च नित्यत्वमिति। अत एव च नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद्वेदशब्दनि-

कृत्य प्रौढिवादेन स्फोटं विघटयति॥ अथापीति॥ स्थिराणि गत्वादिसामान्यानि क्रमविशेषवन्ति गृहीतसङ्गतिकान्यर्थबोधकानीति क्लृप्तेषुसामान्येषु प्रक्रिया सञ्चारयितव्या न त्वक्लृप्तः स्फोटः कल्पनीय इत्यर्थः। वर्णानां स्थायित्ववाचकत्वयोः सिद्धौ फलितमाह। **ततश्चेति**॥ २८॥

पूर्वतन्त्रवृत्तानुवादपूर्वकं सूत्रं व्याचष्टे॥ **कर्तुरित्यादिना**॥ पूर्वतन्त्रसिद्धमेव वेदस्य नित्यत्वं देवादिव्यक्तिसृष्टौ तद्वाचकशब्दस्यापि सृष्टेरसिद्धमित्याशङ्क्य नित्याकृतिवाचकाच्छब्दात् व्यक्तिजन्मो

त्यत्वमपि प्रत्येतव्यम् । तथा च मन्त्रवर्णः, "यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टामि"ति स्थितामेव वाचमनुविन्नां दर्शयति। वेदव्यासश्चैवमेव स्मरति,

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥

इति । २९ ।

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥**

अथापि स्यात् यदि पश्वादिव्यक्तिवत् देवादिव्यक्तयोऽपि सन्तत्यैवोत्पद्येरन् निरुध्येरंश्च ततोऽभिधानाभिधेयाभिधातृव्यवहाराविच्छेदात् सम्बन्धनित्यत्वेन विरोधः शब्दे परिह्रियेत। यदा तु खलु सकलं त्रैलोक्यं परित्यक्त-

त्त्या साङ्केतिकत्वं निरस्य वेदोऽवान्तरप्रलयावस्थायी जगद्धेतुत्वादीश्वरवदित्यनुमानेन द्रढयतीत्यर्थः। यज्ञेन पूर्वसुकृतेन, वाचो वेदस्य, लाभयोग्यतां प्राप्ताः सन्तो याज्ञिकास्तामृषिषु स्थितां लब्धवन्त इति मन्त्रार्थः। अनुविन्नामुपलब्धां। पूर्वमवान्तरकल्पादौ॥ २९ ॥

ननु महाप्रलये जातेरप्यसत्त्वात् शब्दार्थसम्बन्धानित्यत्वं इत्याशङ्क्याह ॥ समानेति ॥ सूत्रं निरस्याशङ्कामाह ॥ अथापीति ॥ व्यक्तिसन्तत्या जातीनां अवान्तरप्रलये सत्त्वात् सम्बधस्तिष्ठति व्य-

नामरूपं निर्लेपं प्रलीयते प्रभवति चाभिनवमिति श्रुतिस्मृतिवादा वदन्ति तदा कथमविरोध इति। तत्रेदमभिधीयते समाननामरूपत्वादिति। तदापि संसारस्यानादित्वं तावदभ्युपगन्तव्यम्। प्रतिपादयिष्यति चाचार्यः संसारस्यानादित्वमुपपद्यते चाप्युपलभ्यते चेति। अनादौ च संसारे यथा स्वापप्रबोधयोः प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारान्न कश्चिद्विरोधः। एवं कल्पान्तरप्रभवप्रलययोरपीति द्रष्टव्यम्। स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते। "यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन्

वहाराविच्छेदात् ज्ञायते चेति वेदस्यानपेक्षत्वेन प्रामाण्येन कश्चिद्विरोधः स्यात्। निर्लेपलये तु सम्बन्धनाशात् पुनः सृष्टौ केनचित् पुंसा सङ्केतः कर्तव्य इति पुरुषबुद्धिसापेक्षत्वेन वेदस्याप्रामाण्यं अध्यापकस्याश्रयस्य नाशादाश्रितस्यानित्यत्वं च प्राप्तमित्यर्थः। महाप्रलयेऽपि निर्लेपलयोऽसिद्धः सत्कार्यवादात्। तथा च संस्कारात्मना शब्दार्थतत्सम्बन्धानां सतामेव पुनः सृष्टावभिव्यक्तेर्नानित्यत्वम्। अभिव्यक्तानां पूर्वकल्पीयनामरूपसमानत्वात् न सङ्केतः केनाचित् कार्यः, विषमसृष्टौ हि सङ्केतापेक्षा न तुल्यसृष्टाविति परिहरति ॥ **तत्रेदमित्यादिना** ॥ नन्वाद्यसृष्टौ सङ्केतः केनचित् कार्य इत्यत आह ॥ **तदापीति** ॥ महासर्गप्रलयप्रवृत्तावपीत्यर्थः। नन्वस्त्वनादिसंसारे सम्बन्धस्यानादित्वं तथापि महाप्रलयव्यवधानादस्मरणे कथं वेदार्थव्यवहारस्तत्राह ॥ **अनादौ चेति** ॥ न कश्चिद्विरोधः, शब्दार्थसम्बन्ध-

प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वैः रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैर्ध्यानैः सहाप्येति, स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" (कौ० ब्रा० उ० अ० ३। ख० ३) इति। स्यादेतत् स्वापे पुरुषान्तरव्यवहाराविच्छेदात् स्वयं च सुषुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसन्धानसम्भवादविरुद्धम्। महाप्रलये तु सर्वव्यवहारोच्छेदाज्जन्मान्तरव्यवहारवच्च कल्पान्तरव्यवहारस्यानुसन्धातुमशक्यत्वात् वैषम्यम् इति। नैष दोषः, सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसन्धानो-

स्मरणादेरिति शेषः। स्वापप्रबोधयोर्लयसर्गासिद्धिमाशङ्क्य श्रुतिमाह॥ **स्वापेति**॥ अथ तदा सुषुप्तो प्राणे परमात्मनि जीव एकीभवति एनं प्राणं सजीवस्तदैतीतिशेषः। एतस्मात् प्राणात्मनः, आयतनं गोलकं। आनन्तर्ये पञ्चमी प्राणेभ्य इत्यादौ द्रष्टव्या। स्वप्नवत् कल्पितस्याज्ञातसत्त्वाभावात् दर्शनं सृष्टिः अदर्शनं लयः इति दृष्टिसृष्टिपक्षः श्रुत्यभिप्रेत इति भावः। दृष्टान्तवैषम्यमाशङ्क्य परिहरति॥ **स्यादित्यादिना**॥ अविरुद्धमनुसन्धानादि-

पपत्तेः। यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसन्दधाना दृश्यन्ते इति, न तत् प्राकृतवदीश्वराणां भवितव्यम्। यथा हि प्राणित्वाविशेषेऽपि मनुष्यादिस्तम्बपर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्धः परेणपरेण भूयान् भवन् दृश्यते, तथा मनुष्यादिष्वेव हिरण्यगर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेणपरेण भूयसी भवतीत्येतत् श्रुतिस्मृतिवादेष्वसकृत् श्रूयमाणं न शक्यं नास्तीति वदितुम्। ततश्चातीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत् कल्पान्तरव्यवहारानुसन्धानोपपत्तिः। तथा च श्रुतिः। "यो ब्रह्मा-

कमिति शेषः। हिरण्यगर्भादयः पूर्वकल्पानुसन्धानशून्याः संसारित्वादस्मदादिवदित्याशङ्क्याह। यद्यपीति॥ इति यद्यपि तथापि न प्राकृतवदितियोजना। ज्ञानादेर्निकर्षवदुत्कर्षोऽप्यङ्गीकार्यः बाधाभावादिति न्यायानुगृहीतश्रुत्यादिभिः सामान्यतो दृष्टानुमानं बाध्यमित्याह। यथा हीत्यादिना॥ ननु तथापि पूर्वकल्पेश्वराणां मुक्तत्वादस्मिन् कल्पे कोऽनुसन्धातेत्यत आह। ततश्चेति॥ ज्ञानाद्युत्कर्षादित्यर्थः। मुक्तेभ्योऽन्येऽनुसन्धातार इति भावः। परमेश्वरानुगृहीतानां ज्ञानातिशये पूर्वोक्तश्रुतिस्मृतिवादानाह। तथा चेति॥ पूर्वं कल्पादौ सृजति तस्मै च ब्रह्मणे प्रहिणोति गमयति तस्य बुद्धौ वेदानाविर्भावयति यस्तं देवं स्वात्माकारं महावाक्योत्थबुद्धौ प्रकाशमानं शरणं पर-

णं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति। स्मरन्ति च शौनकादयो मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्दाशतय्यो दृष्टा इति। प्रतिवेदञ्चैवमेव काण्डर्ष्यादयः स्मर्यन्ते। श्रुतिरप्यृषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वा प्रपद्यते" इत्युपक्रम्य "तस्मादेतानि मन्त्रेमन्त्रे विद्या"दिति। प्राणिनां च सुखप्राप्तये धर्मो विधीयते दुःखपरिहाराय चाधर्मः प्रतिषिध्यते। दृष्टानुश्रविकसुखदुःखविप-

ममभयस्थानं निःश्रेयसरूपमहं प्रपद्य इत्यर्थः। न केवलमेकस्यैव ज्ञानातिशयः किन्तु बहूनां शाखाद्रष्टॄणामिति विश्वासार्थमाह॥ **स्मरन्तीति**। ऋग्वेदो दशमण्डलावयववान् तत्र भवा ऋचो दाशतय्यः वेदान्तरेऽपि काण्डसूक्तमन्त्राणां द्रष्टारो बोधायनादिभिः स्मृता इत्याह॥ **प्रतीति**॥ किञ्च मन्त्राणां ऋष्यादिज्ञानावश्यकत्वज्ञापिका श्रुतिर्मन्त्रदृगृषीणां ज्ञानातिशयं दर्शयतीत्याह। **श्रुतिरपीति**। आर्षेय ऋषियोगः, छन्दो गायत्र्यादि, दैवतमग्न्यादि, ब्राह्मणं विनियोगः एतान्यविदितानि यस्मिन्मन्त्रे तेनेत्यर्थः। स्थाणुं स्थावरं, गर्तं नरकं, तथा च ज्ञानाधिकैः कल्पान्तरितं वेदं स्मृत्वा व्यवहारस्य प्रवर्तितत्वात् वेदस्यानादित्वमनपेक्षत्वं चाविरुद्धमिति भावः। अधुना समाननामरूपत्वं प्रपञ्चयति। **प्राणिनां चेति**। ततः किं तत्राह। **दृष्टेति**।

यौ च रागद्वेषौ भवतो न विलक्षणविषयावित्य-
तो धर्माधर्मफलभूतोत्तरोत्तरा सृष्टिर्निष्पद्यमा-
ना पूर्वसृष्टिसदृश्येव निष्पद्यते। स्मृतिश्च भवति,

"तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनःपुनः॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते" इति॥

प्रलीयमानमपि चेदं जगच्छक्त्यवशेषमेव प्रलीयते शक्तिमूलमेव च प्रभवतीतरथा आक-

ऐहिकामुष्मिकविषयसुखरागकृतधर्मस्य फलं पश्वादिकं दृष्टपश्वादिसदृशमिति युक्तं विसदृशे कामाभावेन हेत्वभावात्। तथा दृष्टदुःखद्वेषकृताधर्मफलं दृष्टसदृशदुःखमेव न सुखं कृतहान्यादिदोषापत्तेरित्यर्थः। तर्कितेर्थे मानमाह॥ **स्मृतिश्चेति**॥ उत्तरसृष्टिः पूर्वसृष्टिसजातीया कर्मफलत्वात् पूर्वसृष्टिवदित्यनुमानाच्चशब्दार्थः। तेषां प्राणिनां मध्ये तान्येव तज्जातीयान्येव। तानि दर्शयन् तत्प्राप्तौ हेतुमाह॥ **हिंस्रेति**॥ कर्माणि विहितनिषिद्धत्वाकारेणापूर्वं क्रियात्वेन संस्कारं च जनयन्ति। तत्रापूर्वात् फलं भुङ्क्ते संस्कारभावितत्वात् पुनस्तज्जातीयानि करोतीत्यर्थः। संस्कारे लिङ्गमाह॥ **तस्मादिति**॥ संस्कारवशादेव पुण्यं पापं वा रोचते। अतोऽभिरुचिलिङ्गात् पुण्यापुण्यसंस्कारोऽनुमेयः स एव स्वभावः प्रकृतिर्वासनेति च गीयते। एवं कर्मणा सृष्टिसादृश्यमुक्त्वा स्वोपादाने लीनकार्यसंस्काररूपशक्तिबलादपि सादृश्यमाह॥ **प्रलीयमानमिति**॥ इतरथा संस्कारप्रलये जगद्वैचित्र्यस्याकस्मिकत्वं स्यादित्यर्थः। ननु जगद्वैचित्र्यकारिण्योऽन्याः श-

स्मिकत्वप्रसङ्गात्। न चानेकाकाराः शक्तयः शक्याः कल्पयितुम्। ततश्च विच्छिद्यविच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणां देवतिर्यङ्मनुष्यलक्षणानां च प्राणिनिकायप्रवाहाणां वर्णाश्रमधर्मफलव्यवस्थानाञ्चानादौ संसारे नियतत्वमिन्द्रियविषयसम्बन्धनियतत्ववत् प्रत्येतव्यम्। नहीन्द्रियविषयसम्बन्धादेर्व्यवहारस्य प्रति सर्गमन्यथात्वं षष्ठेन्द्रियविषयकल्पं शक्यमुत्प्रेक्षितुं। अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात् कल्पान्तरव्यवहारानुसन्धानक्षमत्वाच्चेश्वरा-

क्तयः कल्प्यन्तां तत्राह ॥ न चेति ॥ अविद्यायां लीनकार्यात्मकसंस्कारादन्याः शक्तयो न कल्प्याः मानाभावद्गौरवाच्च, स्वोपादाने लीनकार्यरूपा शक्तिस्तु महान् न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति श्रुतिसिद्धा, अतोऽविद्यातत्कार्यादन्याः शक्तयो न सन्ति आत्माविद्यैव तच्छक्तिरिति सिद्धान्त इत्यर्थः। निमित्तेष्वप्युपादानस्थकार्यमेवाविद्याघटनया शक्तिरन्या वेत्यनाग्रहः। उपादाने कार्यसंस्कारसिद्धेः फलमाह ॥ ततश्चेति ॥ यथा सुप्तोत्थितस्य पूर्वचक्षुजातीयमेवचक्षुर्जायते तच्च रूपजातीयमेव गृह्णाति न रसादिकं, एवं भोग्यलोका भोगाश्रयाः प्राणिनिकाया भोगहेतुकर्माणि संस्कारबलात् पूर्वलोकादितुल्यान्येवेति नियम इत्यर्थः। निकायाः समूहाः। दृष्टान्तासिद्धिमाशङ्क्याह॥न हीति ॥ यथा षष्ठेन्द्रियस्य मनसोऽसाधारणविषयो नास्ति सुखादेः साक्षिवेद्यत्वात्, तथा व्यवहारान्यथात्वमसादित्यर्थः। षष्ठमिन्द्रियं तद्विषयश्चासन्निति वार्थः। उक्तार्थं सङ्क्षिपति ॥ अतश्चेति ॥ व्यवहा-

णां समाननामरूपा एव प्रतिसर्गं विशेषाः प्रादुर्भवन्ति समाननामरूपत्वाच्चावृत्तावपि महासर्गमहाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दप्रामाण्यादिविरोधः। समाननामरूपतां च श्रुतिस्मृती दर्शयतः।

"सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् ॥
दिवञ्च पृथिवीञ्चान्तरीक्षमथो स्वः" ॥ इति।

यथा पूर्वस्मिन् कल्पे सूर्याचन्द्रमःप्रभृति जगत् कृतं तथास्मिन्नपि कल्पे परमेश्वरोऽकल्पयदित्यर्थः। तथा "अग्निर्वा अकामयत अन्नादो देवानां स्यामिति" "स एवमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपदिति" नक्षत्रेष्टिविधौ योऽग्निर्निरवपत् यस्मै वाग्नये निरवपत् तयोः समाननामरूपतां दर्शयतीत्येवं जातीयिका श्रुतिरिहोदाहर्तव्या। स्मृतिरपि,

"ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः।
शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः॥

रसाम्यात्सम्भवाच्च व्यवह्रियमाणा व्यक्तयः समाना एवेत्यर्थः। सूत्रं योजयति ॥समानेत्यादिना॥ भाविदृष्ट्या यजमानोऽग्निः, अन्नादोऽग्निरहं स्यामिति कामयित्वा कृत्तिकानक्षत्राभिमानिदेवायाग्नये अष्टसु कपालेषु पचनीयं हविर्निरुप्तवानित्यर्थः। नक्षत्रव्यक्तिबहुत्वाद्बहुवचनं।

१ सूर्यशब्दे "देवताद्वन्द्वे च" इत्यानङादेशेन दीर्घाकारघटितं रूपं संसाध्यम्।

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥
यथाभिमानिनोऽतीतास्तुल्यास्ते साम्प्रतैरिह।
देवा देवैरतीतैर्हि रूपैर्नामभिरेव च" ॥

इत्येवं जातीयिका द्रष्टव्या ॥ ३० ॥

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

इह देवादीनामपि ब्रह्मविद्यायामस्त्यधिकार इति यत्प्रतिज्ञातं तत्पर्यावर्त्यते। देवादीनामनधिकारं जैमिनिराचार्यो मन्यते। कस्मात् मध्वादिष्वसम्भवात्। ब्रह्मविद्याधिकाराभ्युपगमे हि विद्यात्वाविशेषान्मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत। न चैवं सम्भवति, कथम् "असौ आदित्यो देवमधु"इत्यत्र मनुष्या आदित्यं म-

स्मृतौ, वेदेष्विति विषयसप्तमी, शर्वयन्ते प्रलयान्ते। ऋतूनां वसन्तादीनां, लिङ्गानि नवपल्लवादीनि। पर्यये घटीयन्त्रवदावृत्तौ, भावाः पदार्थाः, तुल्या इति शेषः ॥ ३० ॥

तस्माज्जन्मनाशवद्विग्रहाद्यङ्गीकारेऽपि कर्मणि शब्दे च विरोधाभावात् देवानामस्ति विद्याधिकार इति स्थितमाक्षिपति। मध्वादिष्विति। ब्रह्मविद्या देवादीन् नाधिकारोति विद्यात्वात् मध्वादिविद्यावदित्यर्थः। दृष्टान्तं विवृणोति। कथमित्यादिना। द्युलोकाख्यवंशदण्डे अन्तरिक्षरूपे मधुयूपे स्थित आदित्यो देवानां मोदनान्मधिववम-

ध्वध्यासेनोपासीरन्, देवादिषु ह्युपासकेष्वभ्यु-पगम्यमानेषु आदित्यः कमन्यमादित्यमुपासी-त पुनश्चादित्यव्यपाश्रयाणि पञ्च रोहितादी-न्यमृतान्युनुपक्रम्य "वसवो रुद्रा आदित्या म-रुतः साध्याश्च पञ्च देवगणाः क्रमेण तत्तदमृत-मुपजीवन्तीत्युपदिश्य "स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती"त्यादिना वस्वाद्युपजीव्यान्यमृतानि वि-जानतां वस्वादिमहिमप्राप्तिं दर्शयति। वस्वाद-यस्तु कानन्यान् वस्वादीन् अमृतोपजीविनो वि-जानीयुः, कं चान्यं वस्वादिमहिमानं प्रेप्सेयुः। तथा "ग्निः पादो वायुः पाद आदित्यः पादो दिशः पादो वायुर्वाव सम्वर्गः आदित्यो ब्रह्मेत्यादेश"

ध्वित्यारोप्य ध्यानं कार्यम्। तत्रादित्यस्याधिकारो न युक्तः ध्यातृध्येयभे-दाभावात् इत्याह। देवादिष्विति। अस्तु वस्वादीनां तत्राधिकार इ-ति आशङ्क्य तेषामपि च ध्येयत्वात् प्राप्यत्वाच्च न ध्यातृत्वमित्याह ॥ पुनश्चेति॥ चतुर्वेदोक्तकर्माणि प्रणवश्चेति पञ्च कुसुमानि तेभ्यः सो-माज्यादिद्रव्याणि हुतानि लोहितशुक्लकृष्णपरकृष्णगोपाख्यानि पञ्चा-मृतानि तत्तन्मन्त्रभागैः प्रागाद्यूर्ध्वान्तपञ्चदिगवस्थिताभिरादित्यरश्मि-नाडीभिर्मध्ययूपस्थितच्छिद्ररूपाभिरादित्यमण्डलमानीतानि यशस्ते-जइन्द्रियवीर्यान्नात्मना परिणतानि पञ्चदिक्षु स्थितैर्वस्वादिभिरुपजी-व्यानीति ध्यायतां वस्वादिप्राप्तिरुक्तेत्यर्थः। सूत्रस्थादिपदार्थमाह॥ त-थाग्निरिति॥ आकाशब्रह्मणश्चत्वारः पादाः द्वौ कर्णौ द्वे नेत्रे द्वे नासिके

इत्यादिषु देवतात्मोपासनेषु न तेषामेव देवतात्मनामधिकारः सम्भवति। तथे "मावेव गौतमभरद्वाजावयमेव गौतमोऽयं भरद्वाज" इत्यादिष्वृषिसम्बन्धेषु उपासनेषु न तेषामेवर्षीणामधिकारः सम्भवति कुतश्चन देवादीनामनधिकारः ॥ ३१ ॥

## ज्योतिषि भावाच्च ॥ ३२ ॥

यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बंभ्रमज्जगदवभासयति तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते लोकप्रसिद्धेर्वाक्यशेषप्रसिद्धेश्च। न च ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण चेतनतयाऽर्थित्वादिना वा यो

एका वागिति सप्तस्विन्द्रियेषु शिरश्चमसतीरस्थेषु सप्तर्षिध्यानं कार्यमित्याह ॥ तथेमावेवेति ॥ अयं दक्षिणः कर्णः गौतमो वामो भरद्वाज एवं दक्षिणनेत्रनासिके विश्वामित्रवसिष्ठौ वामे जमदग्निकश्यपौ वागत्रिरित्यर्थः ॥

अत्र ऋषीणां ध्येयत्वान्नाधिकारः ॥ ३१ ॥ किञ्च विग्रहाभावात् देवादीनां न क्वाप्यधिकार इत्याह ॥ ज्योतिषि भावाच्चेति । आदित्यः सूर्यश्चन्द्रः शुक्रोऽङ्गारक इत्यादिशब्दानां ज्योतिःपिण्डेषु प्रयोगस्य भावात् सत्त्वान्न विग्रहवान् देवः कश्चिदस्तीत्यर्थः । आदित्यः पुरस्तादुदेता पश्चादस्तमेतेति मधुविद्यावाक्यशेषे ज्योतिष्येवादित्यशब्दः प्रसिद्धः । तर्हि ज्योतिःपिण्डानामेवाधिकारोऽस्तु तत्राह ॥ न चेति ॥ अ-

गोऽवगन्तुं शक्यते, मृदादिवदचेतनत्वावगमात् । एतेनाग्न्यादयो व्याख्याताः । स्यादेतत्, मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां विग्रहवत्त्वाद्यवगमादयमदोषः इति नेत्युच्यते, न तावल्लोको नाम किञ्चित् स्वतन्त्रं प्रमाणमस्ति; प्रत्यक्षादिभ्य एव ह्यविचारितविशेषेभ्यः प्रमाणेभ्यः प्रसिध्यन्नर्थो लोकात् प्रसिध्यतीत्युच्यते, न चात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति । इतिहासपुराणमपि पौरुषेयत्वात् प्रमाणान्तरमूलतामाकाङ्क्षति । अर्थवादा अपि विधिनैकवाक्यत्वात्

ग्न्यादीनामधिकारमाशङ्क्याह ॥ एतेनेति ॥ अग्निर्वायुर्भूमिः इत्यादिशब्दानां अचेतनवाचित्वेनेत्यर्थः । सिद्धान्ती शङ्कते ॥ स्यादेतदित्यादिना ॥ वज्रहस्तः पुरन्दरः इत्यादयो मन्त्राः । सोऽरोदीदित्यादयोऽर्थवादाः ।

"इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः" ॥

इत्यादीतिहासपुराणानि । लोकेऽपि यमं दण्डहस्तं लिखन्ति, इन्द्रं वज्रहस्तमिति विग्रहादिपञ्चकस्याभावात् अनधिकारदोषो नास्तीत्यर्थः ।

"विग्रहो हविषां भोग ऐश्वर्यञ्च प्रसन्नता ।
फलप्रदानमित्येतत् पञ्चकं विग्रहादिकम्" ॥

मानाभावादेतन्नास्तीति दूषयति ॥ नेत्यादिना ॥ न चात्रेति, विग्रहादावित्यर्थः । अर्थवादा मन्त्रा वा मूलमित्याशङ्क्याह ॥ अर्थवा-

स्तुत्यर्थाः सन्तो न पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे कारणभावं प्रतिपद्यन्ते। मन्त्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्था न कस्यचिदर्थस्य प्रमाणमित्याचक्षते। तस्मादभावो देवादीनामधिकारस्य ॥ ३२ ॥

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति। बादरायणस्त्वाचार्यो भावमधिकारस्य देवादीनामपि मन्यते। यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रत्वसम्भवोऽधिकारस्य तथाप्यस्ति हि शुद्धायां ब्रह्मविद्यायां सम्भवोऽर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य। न च क्वचिदसम्भव इत्येतावता यत्र सम्भवस्तत्राप्यधिकारोऽपोद्येत, मनुष्याणामपि न सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः सम्भवति, तत्र यो न्याय-

दा इत्यादिना ॥ व्रीह्यादिवत् प्रयोगविधिगृहीता मन्त्राः प्रयोगसम्बन्धार्थाभिधानार्थाः नाज्ञातविग्रहादिपरा इति मीमांसका आचक्षत इत्यर्थः। तस्माद्विग्रहाभावादित्यर्थः ॥ ३२ ॥

सूत्राभ्यां प्राप्तं पूर्वपक्षं निरस्यति॥ तुशब्द इत्यादिना ॥ ब्रह्मविद्या देवादीन्नाधिकरोति विद्यात्वात् मध्वादिविद्यावत् इतिउक्तहेतुरप्रयोजक इत्याह ॥ यद्यपीति॥ दर्शादिकं न ब्राह्मणमधिकरोति कर्मत्वात् राजसूयादिवदिति आभाससाम्यं विद्यात्वहेतोराह ॥ न चेति॥

यः सोऽत्रापि भविष्यति। ब्रह्मविद्यां च प्रकृत्य भवति दर्शनं श्रौतं देवाद्यधिकारस्य सूचकम्; "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणामिति" "ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिति" "इन्द्रो ह वै देवानामभि प्रवव्राज विरोचनोऽसुराणा"मित्यादि च। स्मार्तमपि गन्धर्वयाज्ञवल्क्यसंवादादि। यदप्युक्तं ज्योतिषि भावाच्चेति, अत्र ब्रूमः, ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः शब्दाश्चेतनावन्तमैश्वर्याद्युपेतं तंतं देवात्मानं समर्पयन्ति, मन्त्रार्थवादेषु तथा व्यवहारात्। अस्ति ह्यैश्वर्ययोगाद्देवतानां ज्योतिराद्या-

यत्र यस्याधिकारः सम्भवति स तत्राधिकारीति न्यायस्तुल्य इत्यर्थः। यतः सर्वेषां सर्वत्राधिकारो न सम्भवति ततो न चापोद्येतेत्यन्वयः। तत् ब्रह्म यो यो देवादीनां मध्ये प्रत्यक्त्वेनाबुध्यत स तत् ब्रह्माभवदित्यर्थः। ते ह देवा ऊचुरन्योन्यं, तत इन्द्रविरोचनौ सुरासुरराजौ प्रजापतिं ब्रह्मविद्याप्रदं जग्मतुरिति च लिङ्गमस्तीत्यर्थः। किमत्र ब्रह्मामृतमिति गन्धर्वप्रश्ने याज्ञवल्क्य उवाच तमिति मोक्षधर्मेषु श्रुतं देवादीनामधिकारलिङ्गमित्याह॥ **स्मार्तमिति**॥ यथा बालानां गोलकेषु चक्षुरादिपदप्रयोगेऽपि शास्त्रज्ञैर्गोलकातिरिक्तेन्द्रियाणि स्वीक्रियन्ते, तथा ज्योतिरादौ सूर्यादिशब्दप्रयोगेऽपि विग्रहवद्देवताः स्वीकार्या इत्याह। **ज्योतिरादीति**। तथा चेतनत्वेन व्यवहारा-

त्मभिश्चावस्थातुं यथेष्टं च तं तं विग्रहं ग्रहीतुं सामर्थ्यं। तथा हि श्रूयते सुब्रह्मण्यार्थवादे मेधातिथेर्मेषेति, "मेधातिथिं ह काण्वायनं इन्द्रो मेषो भूत्वा जहारेति। स्मर्यते च, "आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह" इति। मृदादिष्वपि चेतनाधिष्ठातारोऽभ्युपगम्यन्ते "मृदब्रवीदापोऽब्रुवन्नित्यादिदर्शनात्। ज्योतिरादेस्तु भूतधातोरादित्यादिष्वप्यचेतनत्वमभ्युपगम्यते,- चेतनास्त्वधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिषु व्यवहारादित्युक्तम्। यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाशनसामर्थ्यमिति, अत्र ब्रूमः। प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणं नान्यार्थत्वमनन्यार्थत्वं वा। तथा

दित्यर्थः। एकस्य जडचेतनोभयरूपत्वं कथं तत्राह॥ अस्ति हीति॥ तथा हि विग्रहवत्तया देवव्यवहारः श्रूयते। सुब्रह्मण्य उद्गातृगणस्थः ऋत्विक् तत्सम्बन्धी योऽर्थवाद इन्द्रागच्छेत्यादिः तत्र मेधातिथेर्मेषेतीन्द्रसम्बोधनं श्रुतं तद्व्याचष्टे॥ मेधेति॥ मुनिं मेषो भूत्वा जहारेति ज्ञापनार्थं मेषेतीन्द्रसम्बोधनमित्यर्थः। यदुक्तमादित्यादयो मृदादिवदचेतना एवेति तन्न सर्वत्र जडाजडांशद्वयसत्त्वादित्याह। मृदिति। आदित्यादौ को जडभागः कश्चेतनांश इति तत्राह। ज्योतिरादेस्त्विति। मन्त्रादिकं पदशक्त्या भासमानविग्रहादौ स्वार्थे न प्रमाणं अन्यपरत्वात्, विषं भुङ्क्ष्वेति वाक्यवत् इत्याह। यदपीति। अन्यपरादपि वाक्यात् बाधाभावे स्वार्थो ग्राह्य इत्याह। अत्र

त्यन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णादि अस्तीत्येवं प्रतिपद्यते। अत्राह विषम उपन्यासः तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति येन तदस्तित्वं प्रतिपद्यते। अत्र पुनर्विध्युद्देशैकवाक्यभावेन स्तुत्यर्थेऽर्थवादे न पार्थगर्थ्येन वृत्तान्तविषया प्रवृत्तिः शक्याध्यवसातुं। न हि महावाक्येऽर्थप्रत्यायकेऽवान्तरवाक्यस्य पृथक् प्रत्यायकत्वमस्ति, यथा "न सुरां पिबेदि"ति नञ्वति वाक्ये पदत्रयसम्बन्धात् सुरापानप्रतिषेध एवैकोऽर्थोऽवगम्यते न पुनः सुरां पिबेदिति पदद्वयसम्बन्धात् सुरापानविधिरपीति। अत्रोच्यते। विषम उपन्यासः, युक्तं यत् सुरापानप्रतिषेधे पदान्वयस्यैकत्वादवान्तरवाक्यार्थस्याग्रहणं, विध्युद्देशार्थवादयोस्त्वर्थवा-

ब्रूम इति। तात्पर्यशून्येऽप्यर्थे प्रत्ययमात्रेणास्तित्वमुदाहरति॥ तथा हीति॥ तृणादौ प्रत्ययोऽस्ति विग्रहादौ स नास्तीति वैषम्यं शङ्कते॥ अत्राहेति॥ विध्युद्देशो वाक्यं तदेकवाक्यतया प्रशस्तो विधिरित्येवार्थवादेषु प्रत्ययः। वृत्तान्तो भूतार्थो, विग्रहादिः तद्विषयः प्रत्ययो नास्तीत्यर्थः। नन्ववान्तरवाक्येन विग्रहादिप्रत्ययोऽस्त्वित्यत आह॥ न हीति॥ सुरापानप्रत्ययोऽपि स्यादितिभावः। पदैकवाक्यत्ववाक्यैकवाक्यत्ववैषम्यान्नैवमित्याह॥ अत्रोच्यत इति॥ नञ्पदमेकं यदा सुरां पिबेदिति पदाभ्यामन्वे-

दस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थक्यवशेन विधिस्तावकत्वं प्रतिपद्यन्ते। यथा हि "वायव्यं श्वेतमालभेत भूतिकामः" इत्यत्र विध्युद्देशवर्तिनां वायव्यादिपदानां विधिना सम्बन्धः, नैवं "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्येषामर्थवादगतानां पदानां न हि भवति वायुर्वा आलभेत क्षेपिष्ठा देवता वा आलभेतेत्यादि वायुस्वभावसङ्कीर्तनेन त्ववान्तरमन्वयं प्रतिपद्य एवं विशिष्टदैवत्यमिदं कर्मेति विधिं स्तुवन्ति। तद्यत्र योऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति तत्र तदनुवादेनार्थवादः प्रवर्तते। यत्र प्रमाणान्तरविरुद्धस्तत्र गुणवादेन। यत्र तु तदुभयं नास्ति तत्र किं प्रमाणान्तराभावाद्गुणवादः स्यादाहोस्वित् प्रमाणा-

ति तदा पदैकवाक्यं एकमेवार्थानुभवं करोति न तु पदद्वयं पृथक् सुरापानं बोधयति तस्य विधौ निषेधानुपपत्तेः वाक्यार्थानुभवं प्रत्यद्वारत्वात्, अर्थवादस्तु भूतार्थसंसर्गस्तुतिद्वारं बोधयन् विधिना वाक्यैकवाक्यतां भजत इत्यस्ति विग्रहाद्यनुभव इत्यर्थः । नन्वर्थवादस्थपदानामवान्तरसंसर्गबोधकत्वं विना साक्षादेव विध्यन्वयोऽस्तु तत्राह ॥ यथा हीति ॥ साक्षादन्वयायोगं दर्शयति ॥ न हीति ॥ अर्थवादात् सर्वत्र स्वार्थग्रहणमाशङ्क्यार्थवादान् विभजते ॥ तद्यत्रे-

न्तरविरोधाद्विद्यमानार्थवाद इति प्रतीतिशरणै-र्विद्यमानार्थवाद आश्रयणीयो न गुणवादः। एतेन मन्त्रो व्याख्यातः। अपि च, विधिभिरेवे-न्द्रादिदैवत्यानि हवींषि चोदयद्भिरपेक्षितमि-न्द्रादीनां स्वरूपं, न हि स्वरूपरहिता इन्द्राद-यश्चेतस्यारोपयितुं शक्यन्ते। न च चेतस्यना-रूढायै तस्यै तस्यै देवतायै हविः प्रदातुं शक्य-ते। श्रावयति च, "यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्नि"ति। न

ति॥ तत्तत्रार्थवादेषु यत्राग्निर्हिमस्य भेषजमित्यादावित्यर्थः। आदि-त्यो यूप इत्यभेदो बाधित इति तेजस्वित्वगुणवादः, यत्र वज्रहस्तः पुरन्दर इत्यादौ मानान्तरसंवादविसंवादौ न स्तः तत्र भूतार्थवाद इत्यर्थः, इति विमृश्येत्यध्याहारः। विग्रहार्थवादः स्वार्थेऽपि तात्पर्य-वान् अन्यपरत्वे सत्यज्ञानाबाधितार्थकशब्दत्वात् प्रयाजादिवाक्य-वत् इति न्यायं मन्त्रेष्वतिदिशति॥ एतेनेति॥ वेदान्तानुवादगुणवा-दानां निरासाय हेतौ पदानि न चोभयपरत्वे वाक्यभेदोऽवान्तरार्थस्य महावाक्यार्थद्वारत्वादिति भावः। विध्यनुपपत्त्यापि स्वर्गवद्देवताविग्रहो-ऽङ्गीकार्य इत्याह। अपि चेति। ननु क्लेशात्मके कर्मणि विधिः फलं विना अनुपपन्न इति भवतु यन्न दुःखेन संभिन्नमित्यर्थवाद-सिद्धः स्वर्गो विधिप्रमाणकः विग्रहं विना विधेः कानुपपत्तिस्तामाह॥ न हीति॥ उद्दिश्य त्यागानुपपत्त्या चेतस्यारोहो ऽङ्गीकार्य इत्यत्र श्रुतिमप्याह॥ यस्या इति॥ अतश्चेतस्यारोहार्थं विग्रह एष्टव्यः। किञ्च कर्मप्रकरणपाठात् विग्रहप्रमितिः प्रयाजवत् कर्माङ्गत्वेना-

च शब्दमात्रमर्थस्वरूपं सम्भवति शब्दार्थयोर्भेदात्, तत्र यादृशं मन्त्रार्थवादयोरिन्द्रादीनां स्वरूपमवगतं न तत्तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम्। इतिहासपुराणमपि व्याख्यातेन मार्गेण सम्भवन्मन्त्रार्थवादमूलत्वात् प्रभवति देवताविग्रहादि साधयितुम्। प्रत्यक्षमूलमपि सम्भवति। भवति ह्यस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षम्। तथा च व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते। यस्तु ब्रूयादिदानीन्तनानामिव पूर्वेषामपि नास्ति देवादिभिः व्यवहर्तुं सामर्थ्यमिति स जगद्वैचित्र्यं प्रतिषेधेत्। इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात्, ततश्च राजसूया-

ङ्गीकार्यतां, विना कर्मापूर्वासिद्धेः। किञ्च सुप्रसन्नविग्रहवद्देवतां त्यक्त्वा शब्दमात्रं देवतेति भक्तिरयुक्तेत्याह ॥ न च शब्देति ॥ न चाकृतिमात्रं शब्दशक्यमस्तु किं विग्रहेणेति वाच्यं, निर्व्यक्त्याकृत्ययोगात्, अतः शब्दस्यार्थाकाङ्क्षायां मन्त्रादिप्रमितविग्रहोऽङ्गीकार्य इत्याह ॥ तत्रेति ॥ एवं मन्त्रार्थवादमूलकमितिहासादिकमपि विग्रहे मानमित्याह ॥ इतिहासेति ॥ प्रमाणत्वेन संभवदित्यर्थः। व्यासादीनां योगिनां देवतादिप्रत्यक्षमपीतिहासादेर्मूलमित्याह ॥ प्रत्यक्षेति ॥ व्यासादयो देवतादिप्रत्यक्षशून्याः प्राणित्वादस्मद्वदित्यनुमानमतिप्रसङ्गेन दूषयति। यस्त्वित्यादिना। सर्वं घटाभिन्नं वस्तुत्वात् घटवदिति जगद्वैचित्र्यं नास्तीत्यपि स ब्रूयात्। तथा क्षत्रियाभावं वर्णाश्रमाभावं

दिचोदना उपरुन्ध्यात्। इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान् वर्णाश्रमधर्मान् प्रतिजानीत ततश्च व्यवस्थाविधायिशास्त्रमनर्थकं स्यात् तस्माद्धर्मोत्कर्षवशाच्चिरन्तना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते। अपि च स्मरन्ति स्वाध्यायादिष्टदेवतासम्प्रयोग इत्यादि। योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलकः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम्। श्रुतिश्च योगमाहात्म्यं प्रत्याख्यापयति

"पृथ्व्यप्तेजोऽनिलखे समुत्थिते
पञ्चात्मके योगगुणे प्रवृत्ते।
न तस्य रोगो न जरा न मृत्युः
प्राप्तस्य योगाग्निमयं शरीरम्", इति॥

ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं

वर्णाश्रमाद्यव्यवस्थां च ब्रूयात् निरङ्कुशबुद्धित्वात्। तथा च राजसूयादिशास्त्रस्य कृतादियुगधर्मव्यवस्थाशास्त्रस्य बाध इत्यर्थः। योगसूत्रार्थादपि देवादिप्रत्यक्षसिद्धिरित्याह। अपि चेति। मन्त्रजपात् देवसान्निध्यं तत्संभाषणं चेति सूत्रार्थः। योगमाहात्म्यस्य श्रुतिस्मृतिसिद्धत्वात् योगिनामस्ति देवादिप्रत्यक्षमित्याह॥ योग इति॥ पादतलादाजानोर्जानोरानाभेराग्रीवं ग्रीवायाश्चाकेशप्ररोहं ततश्चाब्रह्मरन्ध्रं पृथिव्यादिपञ्चके समुत्थिते धारणजाते योगगुणे चाणिमादिके प्रवृत्ते योगाभिव्यक्तं तेजोमयं शरीरं प्राप्तस्य योगिनो न रोगादिस्पर्श इत्य-

नास्मदीयेन सामर्थ्येनोपमातुं युक्तं, तस्मात् समूलमितिहासपुराणम् । लोकप्रसिद्धिरपि न सति सम्भवे निरालम्बनाध्यवसातुं युक्ता, तस्मादुपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः। ततश्चार्थित्वादिसम्भवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः। क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते ॥ ३३ ॥

**शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॥ ३४ ॥**

यथा मनुष्याधिकारनियममपोह्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामाशङ्कां निवर्तयितुं इदमधिकरणमार-

र्थः। चित्रकारादिप्रसिद्धिरपि विग्रहे मानमित्याह ॥ **लोकेति** ॥ अधिकरणार्थमुपसंहरति ॥ **तस्मादिति** ॥ चिन्तायाः फलमाह ॥ **क्रमेति** ॥ एवमेव देवादीनां ब्रह्मविद्याधिकारे सत्येव देवत्वप्राप्तिद्वारा मुक्तिफलान्युपासनानि युज्यन्ते देवानामनधिकारे ज्ञानाभावात् क्रममुक्त्यर्थिनामुपासनेषु प्रवृत्तिर्न स्यात्, अतोऽधिकारनिर्णयात् प्रवृत्तिसिद्धिरिति भावः ॥ ३३ ॥

**शुगस्य-सूच्यते हि** ॥ पूर्वेणास्य दृष्टान्तसङ्गतिमाह ॥ **यथेति** ॥ पूर्वत्र देवादीनां अधिकारसिद्ध्यर्थं मन्त्रादीनां भूतार्थे विग्रहादौ सम-

भ्यते। तत्र शूद्रस्याप्यधिकारः स्यादिति तावत् प्राप्तं, अर्थित्वसामर्थ्ययोः सम्भवात्, "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इतिवत् शूद्रो विद्यायामनवक्लृप्त इति च निषेधाश्रवणात्। यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं न तद्विद्यास्वधिकारस्यापवादकं लिङ्गम्। न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते। भवति च लिङ्गं शूद्राधिकारस्योपोद्बलकं; संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति "अह हारेत्वा शूद्र तवैव सह गोभिरस्तु" इति। विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि विशिष्ट-

न्वयोक्त्या वेदान्तानामपि भूतार्थे ब्रह्मणि समन्वयो दृढीकृतः, अत्रापि शूद्रशब्दस्य श्रौतस्य क्षत्रिये समन्वयोक्त्या स[1] दृढीक्रियत इत्यधिकरणद्वयस्य प्रासङ्गिकस्यास्मिन् समन्वयाध्यायेऽन्तर्भाव इति मन्तव्यं। पूर्वपक्षे शूद्रस्याऽपि द्विजवद्वेदान्तश्रवणे प्रवृत्तिः, सिद्धान्ते तदभाव इति फलं, अत्र वेदान्तविचारो विषयः, स किं शूद्रमधिकरोति न वेति संभवासंभवाभ्यां सन्देहे पूर्वपक्षमाह॥ तत्र शूद्रस्यापीत्यादिना॥ तस्मादनग्नित्वादनवक्लृप्तोऽसमर्थः। विद्यार्थिनि शूद्रशब्दप्रयोगाल्लिङ्गादपि शूद्रस्याधिकार इत्याह॥ भवति चेति॥ जानश्रुतिः किल षट् शतानि गवां रथं च रैक्काय गुरवे निवेद्य मां शिक्षयेत्युवाच, ततो रैक्को विधुरः कन्यार्थी सन् इदमुवाच। अहेति निपातः खेदार्थः। हारेण निष्केन युक्त इत्वा गन्ता रथो हारेत्वा स च गोभिः सह

१ ब्रह्मणिसमन्वयः।

विज्ञानसम्पन्नाः स्मर्यन्ते, तस्मादधिक्रियते शूद्रो विद्यास्वित्येवं प्राप्ते ब्रूमः। न शूद्रस्याधिकारो वेदाध्ययनाभावात्। अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते, न च शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद्वेदाध्ययनस्य, उपनयनस्य च वर्णत्रयविषयत्वात्। यत्त्वर्थित्वं न तदसति सामर्थ्येऽधिकारकारणं भवति। सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति। शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात्। शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वात्। यच्चेदं "शूद्रो यज्ञेऽनवक्लृप्त" इति तत् न्यायपूर्वकत्वाद्विद्यायाम-

हे शूद्र तवैवास्तु किमल्पेनानेन मम गार्हस्थ्यानुपयोगिनेति भावः। अर्थित्वादिसंभवे श्रेयःसाधने प्रवृत्तिरुचिता स्वाभाविकत्वादिति न्यायोपेताल्लिङ्गादित्याह ॥ **तस्मादिति**॥ सूत्राद्बहिरेव सिद्धान्तयति ॥ **न शूद्रस्याधिकार** इत्यादिना ॥ आपाततो विदितो वेदार्थो येन तस्येत्यर्थः। अध्ययनविधिना संस्कृतो वेदस्तदुत्थमापातज्ञानञ्च वेदार्थविचारेषु शास्त्रीयं सामर्थ्यं तदभावात् शूद्रस्यार्थित्वादिसंभवन्यायासिद्धेर्नास्ति वेदान्तविचाराधिकार इत्यर्थः। यद्वाध्ययनसंस्कृतेन वेदेन विदितो निश्चितो वेदार्थो येन तस्य वेदार्थेषु विधिष्वधिकारो नान्यस्य अनधीतवेदस्याऽपि, वेदार्थानुष्ठानाधिकारेऽध्ययनविधिवैयर्थ्यापातात्। अतः फलपर्यन्तब्रह्मविद्यासाधनेषु श्रवणादिविधिषु शूद्रस्यानधिकार इत्यर्थः। अधीतवेदार्थज्ञानवत्त्वरूपस्याध्ययनविधि-

प्यनवक्लृप्तत्वं द्योतयति, न्यायस्य साधारणत्वात्। यत् पुनः संसर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे न तल्लिङ्गं, न्यायाभावात्। न्यायोक्तेर्हि लिङ्गदर्शनं द्योतकं भवति, न चात्र न्यायोऽस्ति। कामञ्चायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्यात् तद्विषयत्वात् न सर्वासु विद्यासु, अर्थवादस्थत्वात् न तु क्वचिदप्ययं शूद्रमधिकर्तुमुत्सहते। शक्यते चायं शूद्रशब्दोऽधिकृतविषये योजयितुं। कथमित्युच्यते। "कं वरे एनमेतत् सन्तं सयुग्वानमिव रैक्कमात्थे"त्यस्मा-

लभ्यस्य सामर्थ्यस्याभावादिति न्यायस्य तुल्यत्वात् यज्ञपदं वेदार्थोपलक्षणार्थमित्याह॥ **न्यायस्य साधारणत्वादिति**॥ तस्माच्छूद्र इत्येतच्छब्दपरामृष्टन्यायस्य यज्ञब्रह्मविद्ययोस्तुल्यत्वादित्यर्थः। पूर्वोक्तं लिङ्गं दूषयति॥ **यदिति**॥ असामर्थ्यन्यायेनार्थित्वादिसम्भवन्यायस्य निरस्तत्वादित्यर्थः। ननु निषादस्थपतिं याजयेदित्यत्राध्ययनाभावेऽपि निषादशब्दात् निषादस्येष्टाविव शूद्रशब्दात् शूद्रस्य विद्यायामधिकारोऽस्त्वित्याशङ्क्य संवर्गविद्यायामधिकारमङ्गीकरोति॥ **कामिति**॥ तद्विषयत्वात् तत्र श्रुतत्वादित्यर्थः। वस्तुतस्तु विधिवाक्यस्थत्वान्निषादशब्दोऽप्यधिकारिसमर्पकः, शूद्रशब्दस्तु विद्याविधिपरार्थवादस्थो नाधिकारिणं बोधयति, असामर्थ्यन्यायविरोधेनान्यपरशब्दस्य स्वार्थबोधित्वासम्भवात् इति मत्वाङ्गीकारं त्यजति॥ **अर्थवादेति**॥ तर्हि शूद्रशब्दस्यात्र श्रुतस्य कोऽर्थ इत्याशङ्क्य सूत्रेणार्थमाह॥ **शक्यते चेत्यादिना**॥ जानश्रुतिर्नाम राजा निदाघ-

हंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे तामृषी रैक्कः शूद्रशब्देनानेन सूचयांबभूवात्मनः परोक्षज्ञानस्य ख्यापनायेति गम्यते, जातिशूद्रस्यानधिकारात्। कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यते इति, उच्यते, तदा द्रवणाच्छुचमभिदुद्राव शुचा वाभिदुद्रुवे शुचा वा रैक्कमभिदुद्रावेति शूद्रावयवार्थसम्भवात् रूढार्थस्य चासम्भवात्। दृश्यते चायमर्थोऽस्यामाख्यायिकायाम्॥ ३४॥

समये रात्रौ प्रासादतले सुष्वाप, तदा तदीयान्नदानादिगुणगणतोषिता ऋषयोऽस्य हितार्थं हंसा भूत्वा मालारूपेण तस्योपरि आजग्मुः, तेषु पाश्चात्यो हंसोऽग्रेसरं हंसमुवाच, भो भो भद्राक्ष किं न पश्यसि जानश्रुतेरस्य तेजः स्वर्गं व्याप्य स्थितं तत् त्वां धक्ष्यति न गच्छेति तमग्रेसर उवाच, कमप्येनं वराकं विद्याहीनं सन्तं अरे सयुग्वानं युग्वा गन्त्री शकटी तया सह स्थितं रैक्कमिवैतद्वचनमात्थ। रैक्कस्य हि ब्रह्मिष्ठस्य तेजो दुरतिक्रमं नास्यानात्मज्ञस्येत्यर्थः। अस्मद्वचनात् खिन्नो राजा शकटलिङ्गेन रैक्कं ज्ञात्वा विद्यावान् भविष्यतीति हंसानामभिप्रायः। कम् उ अरे इति पदच्छेदः उशब्दोऽप्यर्थः। तेषां हंसानामनादरवाक्यश्रवणात् अस्य राज्ञः शुगुत्पन्ना, सा शूद्रशब्देन रैक्केन सूच्यते, हीति सूत्रान्वयः। श्रुतयौगिकार्थलाभे सति अनन्वितरूढ्यर्थस्त्याज्य इति न्यायद्योतनार्थो हि शब्दः। तदा द्रवणात् तया शुचा आद्रवणात्। शूद्रः शोकं प्राप्तवात्। शुचा वा कर्त्र्या राजा अभिदुद्रुवे प्राप्तः। शुचा वा करणेन रैक्कं गतवानित्यर्थः॥ ३४॥

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्॥ ३५॥

इतश्च न जातिशूद्रो जानश्रुतिः, यत्कारणं प्रकरणनिरूपणेन क्षत्रियत्वमस्योत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहारात् लिङ्गात् गम्यते। उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः सङ्कीर्त्यते। "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं सूदेन परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इति। चैत्ररथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यं, कापेययोगो हि चैत्ररथस्यावगतः। "एतेन वै चैत्ररथं कापेया अयाजयन्नि"ति। समानान्वयानां च प्रायेण समानान्वया याजका भवन्ति। "तस्माच्चैत्ररथिर्नामै-

शूद्रशब्दस्य यौगिकत्वे लिङ्गमाह॥ क्षत्रियत्वेति॥ संवर्गविद्याविध्यन्तरमथार्थवाद आरभ्यते। शुनकस्यापत्यं कपिगोत्रं पुरोहितमभिप्रतारिनामकं राजानं च कक्षसेनस्यापत्यं सूदेन परिविष्यमाणौ तौ भोक्तुमुपविष्टौ बटुर्भिक्षितवानित्यर्थः। नन्वस्य चैत्ररथित्वं न श्रुतमित्यत आह॥ चैत्ररथित्वश्चेति॥ एतेन द्विरात्रेणेति छान्दोग्यश्रुत्यैव पूर्वं चित्ररथस्य कापेययोग उक्तः। अभिप्रतारिणोऽपि तद्योगात् चित्ररथवंश्यत्वं निश्चीयते। राजवंश्यानां हि प्रायेण पुरोहितवंश्या याजका भवन्तीत्यर्थः। नन्वस्त्वभिप्रतारिणः चैत्ररथित्वं तावता कथं

कः क्षत्रपतिरजायत" इति च क्षत्रपतित्वावगमात् क्षत्रियत्वमस्यावगन्तव्यं। तेन क्षत्रियेणाभिप्रतारिणा सह समानायां विद्यायां सङ्कीर्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति। समानानामेव हि प्रायेण समभिव्याहारा भवन्ति। क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगतिः। अतो न जातिशूद्रस्याधिकारः॥ ३५॥

**संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥**

इतश्च न शूद्रस्याधिकारो यद्विद्याप्रदेशेषूपनयनादयः संस्काराः परामृश्यन्ते, "तं होपनिन्ये" अधीहि भगव इति होपससाद" "ब्र-

क्षत्रियत्वं तत्राह ॥ **तस्मा**दिति ॥ चित्ररथादित्यर्थः। क्षत्ता सूतः तस्य रैक्वान्वेषणाय प्रेषणं, अन्नगोदानादिकं च जानश्रुतेः क्षत्रियत्वे लिङ्गम् ॥ ३५॥ अत्र शूद्रशब्दो यौगिक एवेति न शूद्रस्याधिकार इति स्थितं तत्र लिङ्गान्तरमाह ॥ **संस्कारे**ति ॥ उपनयनं वेदग्रहणाङ्गं शूद्रस्य नास्तीति पूर्वमुक्तं इह विद्याग्रहणाङ्गस्योपनयनसंस्कारस्य सर्वत्र परामर्शात् शूद्रस्य तदभावान्न विद्याधिकार इत्युच्यते। भाष्ये आदिपदेनाध्ययनगुरुशुश्रूषादयो गृह्यन्ते। तं शिष्यमाचार्य उपनीतवानित्यर्थः। नारदोऽपि विद्यार्थी मन्त्रमुच्चारयन् सनत्कुमारमुपगत इत्याह। ॥ **अधी**ति ॥ उपदिशेति यावत्। ब्रह्मपरा वेदपारगाः, सगुणब्रह्मनिष्ठाः, परं निर्गुणं ब्रह्मान्वेषमाणाः, एष पिप्पलादः तज्जिज्ञासितं सर्वं

ह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यती"ति "ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्ना" इति च "तान् हानुपनीयैवे"त्यपि प्रदर्शितैवोपनयनप्राप्तिर्भवति। शूद्रस्य च संस्काराभावोऽभिलप्यते, "शूद्रश्चतुर्थो वर्ण एकजाति"रित्येकजातित्वस्मरणात्, "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हती"त्यादिभिश्च॥३६॥

## तदभावनिर्धारणे च प्रवृत्तेः॥ ३७॥

इतश्च न शूद्रस्याधिकारो यत् सत्यवचने-

वक्ष्यतीति निश्चित्य ते भरद्वाजादयः षट् ऋषयः तमुपगता इत्यर्थः। ननु वैश्वानरविद्यायां ऋषीन् राजा अनुपनीयैव विद्यामुवाचेति श्रुतेरनुपनीतस्याप्यस्ति विद्याधिकार इत्यत आह॥ **तानाहेति**॥ ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिर इति पूर्ववाक्ये ब्राह्मणा उपनयनार्थमागता इति उपनयनप्राप्तिं दर्शयित्वा निषिध्यते। हीनवर्णेनोत्तमवर्णा अनुपनीयैवोपदेष्टव्या इत्याचारज्ञापनार्थमित्यर्थः। एकजातिः अनुपनीतः। पातकं अभक्ष्यभक्षणकृतं॥ ३६॥ सत्यकामः किल मृतपितृको जाबालां मातरमपृच्छत् किंगोत्रोऽहमिति, तं मातोवाच भर्तृसेवाव्यग्रतयाहमपि तव पितुर्गोत्रं न जानामि जाबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति एतावज्जानामीति ततः स जाबालो गौतममागत्य तेन किंगोत्रोऽसीति पृष्ट उवाच नाहं गोत्रं वेद्मि न माता वेत्ति परन्तु मे मात्रा कथितं उपनयनार्थमाचार्यं गत्वा सत्यकामो जाबालोऽस्मीति ब्रूहीति अनेन सत्यवचनेन तस्य शूद्रत्वाभावो निर्धारितः। अब्राह्मण एतत् सत्यं विविच्य वक्तुं

न शूद्रत्वाभावे निर्द्धारिते जाबालं गौतम उपनेतुमनुशासितुं च प्रववृते, "नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगाः" इति श्रुतिलिङ्गात् ॥ ३७॥

**श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥**

इतश्च न शूद्रस्याधिकारो यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधः तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते। श्रवणप्रतिषेधस्तावद्"थास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरण"मिति, "पद्यु हवा एतत् श्मशानं यच्छूद्रस्तस्मात् शूद्रसमीपे नाध्येतव्य"मिति च। अत एवाध्ययनप्रतिषेधो यस्य हि समीपेऽपि नाध्ये-

नार्हतीति निर्धार्य, हे सोम्य सत्यात् त्वन्नागाः सत्यं न त्यक्तवानसि, अतस्त्वामुपनेष्ये तदर्थं समिधमाहरेति ॥

गौतमस्य प्रवृत्तेश्च लिङ्गात् न शूद्रस्याधिकार इत्याह। **तदभावेति** ॥ ३७ ॥

स्मृत्या श्रवणादिनिषेधाच्च नाधिकार इत्याह। **श्रवणेति** । अस्य शूद्रस्य द्विजैः पठ्यमानं वेदं प्रमादाच्छृण्वतः सीसलाक्षाभ्यां तप्ताभ्यां श्रोत्रद्वयपूरणं प्रायश्चित्तं कार्यमित्यर्थः। पद्यु पादयुक्तं सञ्चरिष्णुरूपमिति यावत्। भवति च स्मृतिरिति शेषः। मतिं वेदार्थज्ञानं । दानं

तव्यं भवति स कथं श्रुतिमधीयीत। भवति च-वेदोच्चारणे जिह्वाच्छेदो धारणे शरीरभेद इति। अत एव च तदर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति। "न शूद्राय मतिं दद्यादि"ति "द्विजातीनामध्ययनमिज्या दान"मिति च। येषां पुनः पूर्वकृतसंस्कारवशात् विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिबद्धुं, ज्ञानस्यैकान्तिकफलत्वात्। "श्रावयेच्चतुरो वर्णा"निति चेतिहासपुराणाधिगमे चातुर्वर्ण्याधिकारस्मरणात्। वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम्॥ ३८॥

## कम्पनात्॥ ३९॥

अवसितः प्रासङ्गिकोऽधिकारविचारः, प्रकृतामेव इदानीं वाक्यार्थविचारणां प्रवर्तयिष्यामः। "यदिदं किञ्च जगत् सर्वं प्राण एजति निः-

नित्यं निषिध्यते शूद्रस्य नैमित्तिकं तु दानमस्त्येव। यदुक्तं विदुरादीनां ज्ञानित्वं दृष्टमिति तत्राह॥ येषामिति॥ सिद्धानां सिद्धेर्दुरपहत्वेऽपि साधकैः शूद्रैः कथं ज्ञानं लब्धव्यमित्यत आह। श्रावयेदिति॥ ३८॥

कम्पनात्॥ अस्यापि प्रासंङ्गिकत्वमाशङ्क्याह॥ अवसित इति॥ समाप्त इत्यर्थः। काठकं पठति॥ यदिदमिति॥ सर्वं जगत् प्राणात् निःसृतं उत्पन्नं प्राणे चिदात्मनि प्रेरके सति एजति चेष्टते, तच्च प्राणाख्यं कारणं महद्ब्रह्म बिभेत्यस्मादिति भयं तस्मिन् भयहेतुत्वे दृष्टा-

सृतं महद्भय वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती"ति। एतद्वाक्यं एजृ कम्पन इति धात्वर्थानुगमात् लक्षितं। अस्मिन् वाक्ये सर्वमिदं जगत् प्राणाश्रयं स्पन्दते। महच्च किञ्चिद्भयकारणं वज्रशब्दितं उद्यतं, तद्विज्ञानाच्चामृतत्वप्राप्तिरिति श्रूयते। तत्र कोऽसौ प्राणः किञ्च तद्भयानकं वज्रमित्यप्रतिपत्तेर्विचारे क्रियमाणे प्राप्तं तावत् प्रसिद्धेः पञ्चवृत्तिर्वायुः प्राण इति, प्रसिद्धेरेव चाशनिर्वज्रं स्याद्वायोश्चेदं माहात्म्यं संकीर्त्यते। कथं सर्वमिदं जगत् पञ्चवृत्तौ वायौ प्राणशब्दिते प्रतिष्ठायैजति वायुनिमित्तमेव च महद्भया-

न्तमाह। वज्रमिति। यथोद्यतं वज्रं भयं तथेत्यर्थः ये तत्प्राणाख्यं ब्रह्म निर्विशेषं विदुस्ते मुक्ता भवन्तीत्याह। य इति। नन्वस्मिन् सूत्रे कथमिदं वाक्यमुदाहृतमित्यत आह। एतदिति। एजत्यर्थस्य सूत्रितत्वात् एजतिपदयुक्तं वाक्यं उदाहृतमित्यर्थः। प्रासङ्गिकाधिकारचिन्तयास्य सङ्गतिर्नापेक्षितेति 'शब्दादेवप्रमित' इत्यनेनोच्यते। तत्राङ्गुष्ठवाक्ये जीवानुवादो ब्रह्मैक्यज्ञानार्थ इत्युक्तं, न तथेह प्राणानुवाद ऐक्यज्ञानार्थः सभवति, प्राणस्वरूपेण कल्पितस्यैक्यायोगात्, अतः प्राणोपास्तिपरं वाक्यमिति प्रत्युदाहरणेन पूर्वपक्षयति॥ प्रसिद्धेः पञ्चवृत्तिरिति॥ नन्वत एव प्राण इत्यादौ ब्रह्माणं लिङ्गात् प्राणश्रुतिर्नीता, अत्रापि सर्वचेष्टाभयहेतुत्वं ब्रह्मलिङ्गमस्तीति नास्ति पूर्वपक्षावसरो गतार्थत्वादित्यत आह। वायोश्चेति। प्रतिष्ठाय स्थितिं लब्ध्वा प्राणे वायौ निमित्ते जगच्चलतीति प्रसिद्धं, अतः

१ अनिश्चयात् संशयादितियावत्।

नकं वज्रमुद्यम्यते । वायौ हि पर्जन्यभावेन विवर्तमाने विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्तन्त इत्याचक्षते । वायुविज्ञानादेव चेदममृतत्वं । तथा हि श्रुत्यन्तरं वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेदे''ति तस्माद्वायुरयमिह प्रतिपत्तव्य इत्येवं प्राप्ते ब्रूमः । ब्रह्मैवेदमिह प्रतिपत्तव्यं, कुतः पूर्वोत्तरालोचनात् । पूर्वोत्तरयोर्हि ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे, इहैव कथमकस्मादन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहि । पूर्वत्र तावत्

"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" ॥

इति । ब्रह्मनिर्दिष्टं तदेवेहापि सन्निधानात् जगत् सर्वं प्राण एजतीति च लोकाश्रयत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते । प्राणशब्दोऽप्ययं परमात्मन्येव प्रयुक्तः, "प्राणस्य प्राण"मिति दर्शनात्, एजयितृत्वमपीदं परमात्मन एवोपपद्यते न वायुमात्रस्य, तथाचोक्तम्,

स्पष्टं ब्रह्मलिङ्गं नास्तीतिभावः । वज्रलिङ्गाच्च वायुरित्याह ॥ वाय्विति ॥ व्यष्टिर्विशेषः समष्टिः सामान्यं । सूत्राद्बहिरेव सिद्धान्तं प्रतिजानीते ॥ ब्रह्मैवेति ॥ पूर्वोत्तरवाक्यैकवाक्यतानुगृहीतं सर्वाश्रयत्वं लिङ्गं वाक्यभेदकप्राणश्रुतेर्बाधकमित्याह ॥ पूर्वत्रेत्यादिना ॥ शुक्रं स्वप्रकाशं ।

"न प्राणेन नापानेन मर्त्यो जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" ॥

इति। उत्तरत्रापि,

"भयादस्याग्निस्तपति भयात्तपति सूर्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" ॥ इति।

ब्रह्मैव निर्देक्ष्यते न वायुः, सवायुकस्य जगतो भयहेतुत्वाभिधानात् तद्वेहापि सन्निधानात् महद्भयं वज्रमुद्यतमिति च भयहेतुत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते । वज्रशब्दोऽप्ययम्भयहेतुत्वसामान्यात् प्रयुक्तः, यथा हि वज्रमुद्यतं ममैव शिरसि निपतेत् यद्यहमस्य शासनं न कुर्यामित्यनेन भयेन जनो नियमेन राजादिशासने प्रवर्तते । एवमिदमग्निवायुसूर्यादिकं जगदस्मादेव ब्रह्मणो बिभ्यन्नियमेन स्वव्यापारे प्रवर्तते इति भयानकं वज्रोपमितं ब्रह्म । तथा च ब्रह्मविषयं श्रुत्यन्तरम्,

"भीषास्माद्वातः पवते भीषोदेति सूर्यः।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" ॥

तदु नात्येति ब्रह्मानाश्रितः कोऽपि लोको नास्त्येवेत्युकारार्थः । सौत्रलिङ्गं व्याचष्टे ॥ एजयितृत्वमिति ॥ सवायुकस्य सर्वस्य कम्पनश्रवणादपि प्राणः परात्मैवेत्यर्थः । ब्रह्मणि वज्रशब्दः कथमित्याशङ्क्य गौणइत्याह ॥ वज्रशब्द इति ॥ बृहदारण्यके वायुरेव व्य-

इत्यमृतत्वफलश्रवणादपि ब्रह्मैवेदमिति गम्यते।-ब्रह्मज्ञानाद्ध्यमृतत्वप्राप्तिः, "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"ति मन्त्रवर्णात्। यत्तु वायुविज्ञानात् क्वचिदमृतत्वमभिहितं तदापेक्षिकं तत्रैव च प्रकरणान्तरकरणेन परमात्मानमभिधाय अतोऽन्यदार्तमिति वाय्वादेरार्तत्वाभिधानात्। प्रकरणादप्यत्र परमात्मनिश्चयः। "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताद् भव्याच्च यत् तत्पश्यसि तद्वद" ॥ इति परमात्मनः पृष्टत्वात्॥ ३९ ॥

## ज्योतिर्दर्शनात्॥ ४० ॥

"एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रूयते, तत्र संशय्यते किं ज्योतिःशब्दं चक्षुर्विषयं

ष्टिरित्यत्रापपुनर्मृत्युमिति अपमृत्युजयरूपमापेक्षिकममृतत्वमुच्यते न मुख्यामृतत्वं। तत्रैव वायूपास्तिप्रकरणं समाप्याथ है नमुषस्तः पप्रच्छेति ज्ञेयात्मानमुक्त्वा वाय्वादेर्नाशित्वोक्तिरित्याह ॥ यत्तु वाय्वित्यादिना॥ तस्मात् काठकवाक्यं ज्ञेये[1] समन्वितमिति सिद्धम्॥ ३९ ॥

॥ **ज्योतिर्दर्शनात्** ॥ छान्दोग्ये प्रजापतिविद्यावाक्यमाह ॥ **एष** इति ॥ परंज्योतिःश्रुतिभ्यां संशयमाह ॥ **तत्रेति** ॥ घटादिविषयावरकतमोनाशकं सौरमित्यर्थः। पूर्वत्र ब्रह्मप्रकरणस्यानुग्राहकः सर्वशा-

१ ब्रह्मणीतिशेषः।

**तमोऽपहं तेजः किं वा परं ब्रह्मेति, किं तावत् प्राप्तं, प्रसिद्धमेव तेजो ज्योतिःशब्दमिति, कुतः तत्र ज्योतिःशब्दस्य रूढत्वात्। "ज्योतिश्चरणाभिधानादित्यत्र हि प्रकरणात् ज्योतिःशब्दः स्वार्थं परित्यज्य ब्रह्मणि वर्तते। न चेह तद्वत् किञ्चित् स्वार्थपरित्यागे कारणं दृश्यते। तथा च नाडीखण्डे, "अथ यत्रैतदस्मात् शरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति मुमुक्षोरादित्यप्राप्तिरभिहिता, तस्मात्प्रसिद्धमेव तेजो**

ब्दसङ्कोचाद्ययोगोऽस्तीति प्राणश्रुतिर्ब्रह्मणि नीता, न तथात्र य आत्मापहतपाप्मेति प्रकरणस्यानुग्राहकं पश्याम इति प्रत्युदाहरणेन पूर्वपक्षमाह ॥ **प्रसिद्धमेवेत्यादिना** ॥ पूर्वपक्षे सूर्योपास्तिः सिद्धान्ते ब्रह्मज्ञानान्मुक्तिरिति फलं। ननु ज्योतिरधिकरणे ज्योतिःशब्दस्य ब्रह्मणि वृत्तेरुक्तत्वात् कथं पूर्वपक्ष इत्यत आह ॥ ज्योतिरिति ॥ तत्र गायत्रीवाक्ये प्रकृतब्रह्मपरामर्शकयच्छब्दसामानाधिकरण्यात् ज्योतिःशब्दस्य स्वार्थत्यागः कृतस्तथात्र स्वार्थत्यागे हेत्वदर्शनात् पूर्वपक्ष इत्यर्थः। ज्योतिःश्रुतेरनुग्राहकत्वेनार्चिरादिमार्गस्थत्वं लिङ्गमाह ॥ **तथा चेति** ॥ ता वा एता हृदयस्य नाड्य इति कण्डिकया नाडीनां रश्मीनां च मिथः संश्लेषमुक्त्वा 'अथ संज्ञालोपानन्तरं यत्र काले एतन्मरणं यथा स्यात्तथोत्क्रामति 'अथ तदा एतैर्नाडीसंश्लिष्टरश्मिभिरूर्ध्वं सन्नुपरि गच्छति, गत्वादित्यं ब्रह्मलोकद्वारभूतं गच्छति इत्यभिहितं, तथैवात्रापि शरीरात् समुत्थाय मृत्वा परं ज्योतिरादित्याख्यमुपसम्पद्य तद्द्वारा ब्रह्मलोकं गत्वा स्वस्वरूपेणाभिनिष्पद्यत इति वक्तव्यं। समु-

ज्योतिःशब्दवाच्यमिति, एवं प्राप्ते ब्रूमः। परमेव ब्रह्म ज्योतिःशब्दं, कस्माद्दर्शनात्। तस्य हीह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते। "य आत्मापहतपाप्मे"त्यपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणादावन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन च प्रतिज्ञानात् "एतं त्वेव ते भूयोऽनुव्याख्यास्यामी"ति चानुसन्धानात्, "अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः" इति च अशरीरतायै ज्योतिःसम्पत्तेरस्याभिधानात् ब्रह्मभावाच्चान्यत्राशरीरतानुपपत्तेः, "परं ज्योतिः स उत्तमः पुरुष" इति च विशेषणात्। यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति, न चासावात्यन्तिको

स्थायोपसम्पद्येति क्त्वाश्रुतिभ्यां ज्योतिषोऽर्चिरादिमार्गस्थत्वभानादित्यर्थः। अतो मार्गस्थसूर्योपास्त्या क्रममुक्तिपरं वाक्यमिति प्राप्ते सिद्धान्तयति ॥ एवमिति ॥ व्याख्येयत्वेनोपक्रान्त आत्मैवात्र ज्योतिःशब्देन व्याख्येय इति ज्योतिर्वाक्येनैकवाक्यता प्रयोजकप्रकरणानुगृहीता, उत्तमपुरुषश्रुत्या वाक्यभेदकज्योतिःश्रुतिर्बाध्येति भावः। अशरीरत्वफललिङ्गात् ब्रह्मैव ज्योतिर्न सूर्य इत्याह ॥अशरीरमिति॥ न च सूर्यप्राप्त्या क्रमेणाशरीरत्वं स्यादिति वाच्यं, परत्वेन विशेषितस्य ज्योतिष एव स उत्तम इति परामर्शेनाशरीरत्वनिश्चयादित्याह ॥ परमिति ॥ पूर्वोक्तलिङ्गं दूषयति ॥ यत्त्विति ॥ नाडीखण्डे दहरोपासकस्य या सूर्यप्राप्तिरुक्ता स न मोक्ष इति युक्ता सूर्योक्तिः, अत्र तु प्रजापतिवाक्ये निर्गुणविद्यायामर्चिरादिगतिस्थसूर्यस्यानन्वयादनर्थ-

ह्योऽप्यर्थ इति चेत्, अत्यन्तविरुद्धां स्वात्मनि क्रियामभ्युपगच्छसि अग्निरात्मानं दहतीतिवत् । अविरुद्धं तु लोकप्रसिद्धं स्वात्मव्यतिरिक्तेन विज्ञानेन बाह्योऽर्थोऽनुभूयत इति नेच्छस्यहो पाण्डित्यं महद्दर्शितं। न चार्थव्यतिरिक्तमपि विज्ञानं स्वयमेवानुभूयते स्वात्मनि क्रियाविरोधादेव। ननु विज्ञानस्य स्वरूपव्यतिरिक्तग्राह्यत्वे तदप्यन्येन ग्राह्यं तदप्यन्येनेत्यनवस्था प्राप्नोति । अपि च प्रदीपवदवभासात्मकत्वात् ज्ञानस्य ज्ञानान्तरं कल्पयतः समत्वादवभास्यावभासकभावानुपपत्तेः कल्पनानर्थक्यमिति। तदुभयमप्यसत् विज्ञानग्रहणमात्र एव विज्ञानसाक्षिग्रहणाकाङ्क्षानुत्पादादनवस्थाशङ्कानुपपत्तेः साक्षिप्रत्यययोश्च स्वभाववैषम्यादुप-

द्धं त्यजता बौद्धतनयेन मौढ्यं दर्शितमित्याह ॥ अत्यन्तेति ॥ ज्ञानं स्ववेद्यमित्यङ्गीकृत्य मौर्ख्यमापादितं वस्तुतः स्ववेद्यत्वमयुक्तमित्याह ॥ न चेति ॥ कर्तरि क्रियां प्रति गुणभूते प्रधानत्वाख्यकर्मत्वायोगात् स्वकर्तृकवेदनकर्मत्वमसदित्यर्थः। न च स्वविषयत्वमात्रं स्ववेद्यत्वमिति वाच्यं अभेदेविषयित्वस्याप्यसम्भवादिति भावः। ज्ञानस्य स्ववेद्यत्वाभावे दोषद्वयं स्यादिति शङ्कते॥ नन्विति ॥ अनवस्थां च साम्यञ्चेति दोषद्वयं परिहरति ॥ तदुभयमपीति॥ अनित्यज्ञानस्य जन्मादिमत्त्वेन घटवज्जडस्य स्वेन स्वीयजन्मादिग्रहायोगादस्ति ग्राहकाकाङ्क्षा

लब्ध्युपलभ्यभावोपपत्तेः, स्वयं सिद्धस्यसाक्षिणोऽप्रत्याख्येयत्वात् । किञ्चान्यत् प्रदीपवद्विज्ञानमवभासकान्तरनिरपेक्षं स्वयमेव प्रथत इति ब्रुवता प्रमाणागम्यं विज्ञानमनवगन्तृकमित्युक्तं स्यात् शिलाघनमध्यस्थप्रदीपसहस्रप्रथनवत् बाढमेवमनुभवरूपत्वात्तु विज्ञानस्येष्टो नः पक्षस्त्वयानुज्ञात इति चेत्, न, अन्यस्यावगन्तुश्चक्षुरादिसाधनस्य प्रदीपादिप्रथनदर्शनात्, अतो विज्ञानस्याप्यवभास्यत्वाविशेषात् सत्येवान्यस्मिन्नवगन्तरि प्रथनं प्रदीपवदवगम्यते। साक्षिणोऽवगन्तुश्च स्वयंसिद्धतामुपक्षिपता स्व-

साक्षिणस्तु सत्तायां स्फूर्तौ च निरपेक्षत्वान्नानवस्था नापि साम्यं चिज्जडत्ववैषम्यादित्यर्थः । साक्षी क्व इत्यत आह ॥ स्वयं सिद्धस्येति ॥ निरपेक्षस्य साक्षिणोऽसत्त्वे क्षणिकविज्ञानभेदासिद्धेः सोऽङ्गीकार्य इत्यर्थः। अनित्यज्ञानस्वरूपसाधकत्वाच्च साक्षी स्वीकार्य इत्याह॥ किञ्चेति ॥ विज्ञानं ज्ञानान्तरानपेक्षमिति ब्रुवता तस्याप्रामाणिकत्वमुक्तं स्यात् स्वयं प्रथनमिति ब्रुवता ज्ञातृशून्यत्वं चोक्तं स्यात्तथा च ज्ञातृज्ञानाविषयत्वाच्छिलास्थप्रदीपवदसदेव विज्ञानं स्यादतस्तत्साक्ष्येष्टव्य इत्यर्थः । विज्ञानस्य स्वान्यज्ञातृशून्यत्वमिष्टमेव त्वयाऽऽपाद्यते, न चासत्त्वापत्तिः ज्ञात्रभावादिति वाच्यं। स्वस्यैव ज्ञातृत्वादिति शाक्यः शङ्कते ॥ बाढमिति ॥ अभेदे ज्ञातृज्ञेयत्वायोगात् ज्ञात्रन्तरमावश्यकमिति परिहरति ॥ नेति ॥ विमतं विज्ञानं स्वातिरिक्तवेद्यं वेद्यत्वाद्देहवदित्यर्थः । अतिरिक्तः साक्षी किमन्यवेद्यः स्ववेद्यो वा आद्येऽनवस्था द्वि-

यं प्रथते विज्ञानमित्येष एव मम पक्षस्त्वया वाचो युक्त्यन्तरेणाश्रित इति चेत्, न, विज्ञानस्योत्पत्तिप्रध्वंसानेकत्वादिविशेषवत्त्वाभ्युपगमात्। अतः प्रदीपवद्विज्ञानस्यापि व्यतिरिक्तावगम्यत्वमस्माभिः प्रसाधितम्॥ २८॥

## वैधर्म्याच्च न स्वप्नादिवत्॥ २९॥

यदुक्तं बाह्यार्थापलापिना स्वप्नादिप्रत्ययवज्जागरितगोचरा अपि स्तम्भादिप्रत्यया विनैव बाह्येनार्थेन भवेयुः प्रत्ययत्वाविशेषादिति, तत् प्रति वक्तव्यं, अत्रोच्यते, न स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुमर्हन्ति। कस्मात् वैधर्म्यात्। वैधर्म्यं हि भवति स्वप्नजागरितयोः किं पु-

तीये विज्ञानवाद एव भङ्ग्यन्तरेणोक्तः स्यादिति शङ्कते ॥ साक्षिण इति। त्वया विज्ञानं जन्मविनाशयुक्तमुच्यते। अतः कार्यस्य जडत्वनियमात् व्यतिरिक्तवेद्यमस्माभिः साधितं कूटस्थचिदात्मनो ग्राहकानपेक्षत्वान्नानवस्थेति चोक्तमतो महद्वैलक्षण्यमावयोरिति परिहरति ॥ न विज्ञानस्येति ॥ २८ ॥

एवं वेद्यविज्ञानवदर्थस्याप्युपलब्धेर्न बाह्यार्थाभाव इत्युक्तं, संप्रति जाग्रद्विज्ञानं स्वप्नादिविज्ञानवन्न बाह्यालम्बनमित्यनुमानं दूषयति ॥ वैधर्म्याच्चेति ॥ किमत्र निर्विषयत्वं साध्यमुत पारमार्थिकविषयशून्यत्वं, अथ वा व्यावहारिकविषयशून्यत्वं, नाद्यः स्वप्नादिविभ्रमाणामपि मिथ्यार्थालम्बनत्वेन दृष्टान्ते साध्यवैकल्यात्। न द्वितीयः सिद्धसाधनात्, इति सूत्रस्थचकारार्थः। तृतीये तु व्यवहारदशायां बाधि-

नवैधर्म्यं बाधाबाधाविति ब्रूमः। बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य मिथ्या मयोपलब्धो महाजनसमागम इति न ह्यस्ति मम महाजनसमागमो निद्राग्लानं तु मे मनो बभूव, तेनैषा भ्रान्तिरुद्बभूवेति। एवं मायादिष्वपि भवति यथायथं बाधः। न चैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्याञ्चिदप्यवस्थायां बाध्यते, अपि च स्मृतिरेषा यत् स्वप्नदर्शनं, उपलब्धिस्तु जागरितदर्शनं स्मृत्युपलब्ध्योश्च प्रत्यक्षमन्तरं स्वयमनुभूयते, अर्थविप्रयोगसम्प्रयोगात्मकं 'इष्टं पुत्रं स्मरामि' 'नोपलभे' 'उपलब्धुमिच्छामि' इति। तत्रैवं सति न शक्यते वक्तुं मिथ्या जागरितोपलब्धिरुपलब्धित्वात् स्वप्नोपलब्धिवदित्युभयोरन्तरं स्वयमनुभवता। न च स्वानुभवापलापः

तार्थग्राहित्वं उपाधिरित्याह॥ बाध्यते हीत्यादिना॥ निद्राग्लानमिति करणदोषोक्तिः। साधनव्यापकत्वं निराह॥ न चैवमिति॥ किञ्च प्रमाणजानुभव उपलब्धिः पक्षोऽप्रमाणजं स्वप्नज्ञानं दृष्टान्त इति वैधर्म्यान्तरं। परमतेन स्वप्नस्य स्मृतित्वमङ्गीकृत्याह॥ अपि चेति॥ स्मृतिप्रत्यक्षोपलब्ध्योर्वैधर्म्यान्तरमाह॥ अर्थविप्रयोगेति॥ असम्बन्धश्चावर्तमानश्च स्मृतेरर्थो विषय इति निरालम्बनत्वमप्यस्याः कदाचिद्भवेत् न संप्रयुक्तवर्तमानार्थमात्रग्राहिण्या उपलब्धेरिति भावः। पूर्वोक्तप्रमाणाप्रमाणजत्ववैधर्म्योक्तिफलमाह॥ तत्रैवं सतीति॥ वैधर्म्ये सतीत्यर्थः। अप्रमाणजत्वोपाधेर्निरालम्बनत्वानुमानं न युक्तमिति भावः। वैधर्म्या-

प्राज्ञमानिभिर्युक्तः कर्तुं। अपि चानुभवविरोधप्रसङ्गात् जागरितप्रत्ययानां स्वतो निरालम्बनतां वक्तुमशक्नुवता स्वप्नप्रत्ययसाधर्म्याद्वक्तुमिष्यते। न हि यो यस्य स्वतो धर्मो न सम्भवति सोऽन्यस्य साधर्म्यात्तस्य सम्भविष्यति। न ह्यग्निरुष्णोऽनुभूयमान उदकसाधर्म्याच्छीतो भविष्यति। दर्शितं तु वैधर्म्यं स्वप्नजागरितयोः॥२९॥

## न भावोऽनुपलब्धेः ॥ ३० ॥

यदप्युक्तं विनाप्यर्थेन ज्ञानवैचित्र्यं वासनावैचित्र्यादेवावकल्पत इति तत् प्रति वक्तव्यं। अत्रोच्यते न भावो वासनानामुपपद्यते त्वत्पक्षेऽनुपलब्धेर्बाह्यानामर्थानां। अर्थोपलब्धिनिमित्ता हि प्रत्यर्थं नानारूपा वासना भवन्ति,

सिद्धिं निरस्यति ॥ न चेति ॥ बाधमप्याह ॥ अपि चेति ॥ वस्तुतो घटाद्यनुभवस्य निरालम्बनत्वं धर्मो यदि स्यात्तदा किं दृष्टान्ताग्रहेण, प्रत्यक्षतोऽपि वक्तुं शक्यत्वात्, न हि वह्नेरौष्ण्यं दृष्टान्तेन वक्तव्यं, यदि न वस्तुतो धर्म्मोऽस्ति तदापि किं दृष्टान्तेन, बाधितस्य दृष्टान्तसहस्रेणापि दुःसाध्यत्वादतः स्वतो निरालम्बनत्वोक्तौ सालम्बनत्वानुभवबाधभिया त्वयानुमातुमारब्धं तथापि बाधो न मुञ्चतीत्यर्थः। उक्तोपाधिरपि न विस्मर्तव्य इत्याह ॥ दर्शितं त्विति ॥ २९ ॥

सूत्रव्यावर्त्यं स्मारयित्वा दूषयति ॥ यदप्युक्तमित्यादिना ॥ भाव उत्पत्तिः सत्ता वा। ननु बाह्यार्थानुपलब्धावपि पूर्वपूर्ववासनाबला-

अनुपलभ्यमानेषु त्वर्थेषु किंनिमित्ता विचित्रा वासना भवेयुः, अनादित्वेऽप्यन्धपरम्परान्यायेनाप्रतिष्ठैवानवस्था व्यवहारविलोपिनी स्यान्नाभिप्रायसिद्धिः। यावप्यन्वयव्यतिरेकावर्थापलापिनोपन्यस्तौ वासनानिमित्तमेवेदं ज्ञानजातं नार्थनिमित्तमिति तावप्येवं सति प्रत्युक्तौ द्रष्टव्यौ, विनार्थोपलब्धवासनानुत्पत्तेः। अपि च विनापि वासनाभिरर्थोपलब्ध्युपगमात् विना त्वर्थोपलब्ध्या वासनोत्पत्त्यनभ्युपगमात् अर्थसद्भावमेवान्वयव्यतिरेकावपि प्रतिष्ठापयतः।

दुत्तरोत्तरविज्ञानवैचित्र्यमस्तु बीजाङ्कुरवदनादित्वादित्यत आह ॥ अनादित्वेऽपीति॥ बीजादङ्कुरो दृष्ट इति, अदृष्टेऽपि तज्जातीययोः कार्यकारणभावकल्पना युक्ता, इह त्वर्थानुभवनिरपेक्षवासनोत्पत्तेरादावेव कल्प्यत्वादनादित्वकल्पना निर्मूलेति नाभिप्रेतधीवैचित्र्यसिद्धिरित्यर्थः। ननु निरपेक्षवासनानां सत्त्वे धीवैचित्र्यमसत्त्वे तु नेति स्वप्ने दृष्टमिति समूलाऽनवस्थेत्यत आह॥ याविति॥ वासनानां बाह्यार्थानुभवकार्यत्वे सति नैरपेक्ष्यासिद्धिर्न त्वयापि दृष्टेत्यर्थः। कार्यत्वग्राहकं व्यतिरेकमाह॥ विनेति॥ अर्थानुभवकार्याणां वासनानां तदनपेक्षत्वायोगान्न त्वदुक्तान्वयादिदृष्टिरित्युक्तमभिन्नवार्थोपलब्धिवैचित्र्यस्य वासनानांविनापि भावेन व्यतिरेकव्यभिचाराच्च न क्वापि वासनामात्रकृतं धीवैचित्र्यं किन्त्वर्थानुभवे सति वासनाऽसति नेत्यन्वयव्यतिरेकाभ्यां वासनामूलानुभवावच्छेदकार्थवृत्तमेवेति बाह्यार्थसद्भावसिद्धिरित्याह ॥ अपि चेति ॥ यः संस्कारः स साश्रयो लोके दृष्टः, यथा वेगादिरिष्वाश्रयः,

अपि च वासना नाम संस्कारविशेषाः, संस्काराश्च नाश्रयमन्तरेणावकल्पन्ते, एवं लोके दृष्टत्वात्, न च तव वासनाश्रयः कश्चिदस्ति प्रमाणतोऽनुपलब्धेः ॥ ३० ॥

## क्षणिकत्वाच्च ॥ ३१ ॥

यदप्यालयविज्ञानं नाम वासनाश्रयत्वेन परिकल्पितं तदपि क्षणिकत्वाभ्युपगमादनवस्थितस्वरूपं सत्प्रवृत्तिविज्ञानवन्न वासनानामधिकरणं भवितुमर्हति। न हि कालत्रयसम्बन्धिन्येकस्मिन्नन्वयिन्यसति कूटस्थे वा सर्वार्थदर्शिनि देशकालनिमित्तापेक्षवासनाधीनस्मृतिप्रतिसन्धानादिव्यवहारः सम्भवति। स्थिरस्वरूपत्वे

अतो विज्ञानसंस्काराणां न भावः। आश्रयानुपलब्धेरित्यर्थान्तरमाह ॥ अपि चेति ॥ ३० ॥

अस्त्वालयविज्ञानमाश्रय इत्यत आह ॥ क्षणिकत्वाच्चेति ॥ सूत्रं व्याचष्टे ॥ यदपीति ॥ सहोत्पन्नयोः सव्येतरविषाणवदाश्रयाश्रयिभावायोगात् पौर्वापर्ये चाधेयक्षणे सत अधारत्वायोगात् सत्त्वे क्षणिकत्वव्याघातान्नाधारत्वमालयविज्ञानस्य क्षणिकत्वान्नीलादिविज्ञानवदित्यर्थः। अस्तु तर्हि आलयविज्ञानसन्तानाश्रया वासना इत्यतआह ॥ न हीति ॥ सविकारः कूटस्थो वा स्थाय्यात्मा यदि नास्ति तदा सन्तानस्यावस्तुत्वाद्देशाद्यपेक्षया यद्वासनानामाधानं निक्षेपो यश्च स्मृतिप्रत्यभिज्ञे यश्च तन्मूलो व्यवहारः, तत् सर्वं न सम्भवतीत्यर्थः। य-

त्वालयविज्ञानस्य सिद्धान्तहानिः । अपि च विज्ञानवादेऽपि क्षणिकत्वाभ्युपगमस्य समानत्वाद् यानि बाह्यार्थवादे क्षणिकत्वनिबन्धनानि दूषणान्युद्भावितानि—उत्तरोत्पादे च पूर्वनिरोधादित्येवमादीनि तानीहाप्यनुसन्धातव्यानि। एवमेतौ द्वावपि वैनाशिकपक्षौ निराकृतौ बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च। शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते। न ह्ययं सर्वप्रमाणसिद्धो

दि व्यवहारार्थं आत्मस्थायित्वं तदापसिद्धान्त इत्याह ॥ स्थिरेति ॥ सूत्रमतिदेशार्थत्वेनापि व्याचष्टे ॥ अपि चेति ॥ मतद्वयनिरासमुपसंहरति ॥ एवमिति ॥ ज्ञानज्ञेयात्मकस्य सर्वस्य सत्त्वासत्त्वाभ्यां विचारासहत्वाच्छून्यतावशिष्यत इति माध्यमिकपक्षस्यापि मानमूलत्वमाशङ्क्य सूत्रकारः किमिति न निराचकारेत्यत आह ॥ शून्येति ॥ आदरः पृथक्सूत्रारम्भो न क्रियते एतान्येव तन्मतनिरासार्थत्वेनापि योज्यन्त इत्यर्थः। तथा हि ज्ञानार्थयोर्नाभावः प्रमाणत उपलब्धेः। ननु जाग्रत्स्वप्नौ ज्ञानार्थशून्यौ अवस्थात्वात् सुषुप्तिवदित्यत आह ॥ **वैधर्म्याच्च न स्वप्नादिवत्** ॥ स्वप्नः आदिर्यस्याः सुषुप्तेः तद्वन्नेतरावस्थयोः शून्यत्वमुपलब्ध्यनुपलब्धिवैधर्म्यलक्षणबाधितज्ञानार्थोपलब्धिबाधात् सुषुप्तावप्यात्मज्ञानसत्त्वेन साध्यवैकल्पाच्च नानुमानमित्यर्थः। किञ्च निरधिष्ठाननिषेधायोगादधिष्ठानमेव तत्त्वं वाच्यं, तस्य त्वन्मते न भावः। मानतोऽनुपलब्धेरित्याह ॥ **न भावोऽनुपलब्धेः** ॥ उपलब्ध्यनुपलब्धिलक्षणं यद्वैधर्म्यं तल्लक्ष्यतेऽनयेति सा चासौ बाधितज्ञानार्थोपलब्धिस्तद्रूपबाधात् इत्यर्थः। तदर्थमाह ॥ न ह्ययमिति ॥ यद्वा

लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेप-
न्होतुं अपवादाभावे उत्सर्गप्रसिद्धेः॥ ३१॥

## सर्वथानुपपत्तेश्च॥ ३२॥

किं बहुना, सर्वप्रकारेण यथा यथायं वैनाशिकसमय उपपत्तिमत्त्वाय परीक्ष्यते तथा तथा सिकताकूपवद्विदीर्यत एव न काञ्चिदप्यत्रोपपत्तिं पश्यामः, अतश्चानुपपन्नो वैनाशिकतन्त्रव्यवहारः। अपि च बाह्यार्थविज्ञानशून्यवादत्रयमितरेतरविरुद्धमुपदिशता सुगतेन स्पष्टीकृतमात्मनोऽसम्बद्धप्रलापित्वं, प्रद्वेषो वा प्रजासु विरुद्धार्थप्रतिपत्त्या विमुह्येयुरिमाः प्रजा इति। सर्वथाप्यनादरणीयोऽयं सुगतसमयः श्रेयस्कामैरित्यभिप्रायः॥ ३२॥

## नैकस्मिन्नसम्भवात्॥ ३३॥

निरस्तः सुगतसमयः, विवसनसमय इदा-

ति तन्नासदित्युत्सर्गतः प्रपञ्चस्य न शून्यत्वं बाधाभावादित्यर्थः। न च सत्त्वासत्त्वाभ्यां विचारासहत्वादसत्त्वं मिथ्यात्वसम्भवादिति भावः। क्षणिकत्वाच्चेति सूत्रं क्षणिकत्वोपदेशाच्चेति पठनीयं। शून्यत्वविरुद्धक्षणिकत्वोपदेशादसङ्गतप्रलापी सुगत इत्यर्थः॥ ३१॥

सुगतमतासाङ्गत्यमुपसंहरति॥ सर्वथेति॥ सर्वज्ञस्य कथं विरुद्धप्रलापस्तत्राह॥ प्रद्वेषो वेति॥ वेदबाह्या अत्र प्रजा ग्राह्याः, अतो भ्रान्त्येकमूलसुगतसिद्धान्तेन वेदान्तसिद्धान्तस्याविरोध इति सिद्धम्॥ ३२॥

नीं निरस्यते। सप्त चैषां पदार्थाः सम्मता जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा नाम। संक्षेपतस्तु द्वावेव पदार्थौ जीवाजीवाख्यौ यथायोगं तयोरेवेतरान्तर्भावादिति मन्यन्ते, तयोरिममपरं प्रपञ्चमाचक्षते; पञ्चास्तिकाया नाम जीवास्तिकायः पुद्गलास्तिकायः धर्मास्तिकायः अधर्मास्तिकायः आकाशास्तिकायश्चेति। सर्वेषां-

नैकस्मिन्नसम्भवात्॥ मुक्तकच्छमते निरस्ते मुक्ताम्बराणां मतं बुद्धिस्थं भवति तन्निरस्यत इति प्रसङ्गसङ्गतिमाह॥ निरस्त इति॥ एकरूपं ब्रह्मेति वैदिकसिद्धान्तस्यानेकान्तवादेन विरोधोऽस्ति न वेति तद्वादस्य मानभ्रान्तिमूलत्वाभ्यां सन्देहे मानमूलत्वात् विरोध इति पूर्वपक्षफलमभिसन्धाय तन्मतमुपन्यस्यति॥ सप्त चेति॥ जीवाजीवौ भोक्तृभोग्यौ, विषयाभिमुख्येन इन्द्रियाणां प्रवृत्तिरास्रवः, तां संवृणोति इति संवरो यमनियमादिः, निर्जरयति नाशयति कल्मषमिति निर्जरस्तप्तशिलारोहणादिः, बन्धः कर्म, मोक्षः कर्मपाशनाशे सत्यलोकाकाशप्रविष्टस्य सततोर्ध्वगमनं। नन्वास्रवादीनां भोग्यान्तर्भावात् कथं सप्तत्वमित्यत आह॥ संक्षेपतस्त्विति॥ संक्षेपविस्तराभ्यामुक्तार्थेषु मध्यमरीत्या विस्तारान्तरमाह॥ तयोरिति॥ अस्तिकायशब्दः साङ्केतिकः पदार्थवाची। जीवश्चासावस्तिकायश्चेत्येवं विग्रहः। पूर्यन्ते गलन्तीति पुद्गलाः परमाणुसङ्घाः कायाः, सम्यक् प्रवृत्त्यनुमेयो धर्मः, ऊर्ध्वगमनशीलस्य जीवस्य देहे स्थितिहेतुरधर्मः, आवरणाभाव आकाश इत्यर्थः। पञ्चपदार्थानामवान्तरभेदमाह॥ सर्वेषामिति॥ अयमर्थः। जीवास्तिकायस्त्रिविधः कश्चिज्जीवो नित्यसिद्धः अर्हन्मुख्यः केचित् साम्प्रतिकमुक्ताः केचिद्बद्धा इति। पु-

मप्येषामवान्तरप्रभेदान् बहुविधान् स्वसमय परिकल्पितान् वर्णयन्ति। सर्वत्र चेमं सप्तभङ्गीनयं नाम न्यायमवतारयन्ति। स्यादस्ति स्या-

द्गलास्तिकायः षोढा पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमं चेति। प्रवृत्तिस्थितिलिङ्गौ धर्माधर्मावुक्तौ। आकाशास्तिकायो द्विविधः लोकाकाशः सांसारिकः, अलोकाकाशः मुक्ताश्रय इति। बन्धाख्यं कर्माष्टविधं चत्वारि घातिकर्माणि चत्वार्यघातीनि। तत्र ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमान्तर्यं चेति घातिकर्माणि। तत्त्वज्ञानान्न मुक्तिरिति ज्ञानमाद्यं कर्म, आर्हततन्त्रश्रवणान्न मुक्तिरिति ज्ञानं द्वितीयं, बहुषु तीर्थकरप्रदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयं, मोक्षमार्गप्रवृत्तिविघ्नकरणमान्तर्यं, इमानि चत्वारि श्रेयोहन्तृत्वात् घातिकर्माणि। अथाघातीनि चत्वारि कर्माणि वेदनीयं, नामिकं गोत्रिकमायुष्कमिति। ममवेदितव्यं तत्त्वमस्तीत्यभिमानो वेदनीयं, एतन्नामाहमस्मीत्यभिमानो नामिकं, अहमत्र भवतो देशिकस्यार्हतः शिष्यवंशे प्रविष्टोऽस्मीत्यभिमानो गोत्रिकं, शरीरस्थित्यर्थं कर्म आयुष्कं। अथवा शुक्रशोणितमिश्रितमायुष्कं, तस्य तत्त्वज्ञानानुकूलदेहपरिणामशक्तिर्गोत्रिकं, शक्तस्य तस्य द्रवीभावात्मककललावस्थाया बुद्बुदावस्थायाश्चारम्भकः क्रियाविशेषो नामिकं, सक्रियस्य जाठराग्निवायुभ्यामीषद्घनीभावो वेदनीयं। तत्त्ववेदनानुकूलत्वात्तान्येतानि तत्त्वावेदकशुक्लपुद्गलार्थत्वादघातीनि। तदेतत् कर्माष्टकं जन्मार्थत्वाद्बन्धः आस्रवादिद्वारेति इयं प्रक्रिया मानशून्येति द्योतयति॥

**स्वसमयपरिकल्पितानिति**॥ स्वीयतन्त्रसङ्केतमात्रकल्पितानित्यर्थः। पदार्थानामुक्तानामनेकान्तत्वं वदन्तीत्याह॥ **सर्वत्रेति**॥ अस्तित्वनास्तित्वादिविरुद्धधर्मद्वयमादाय वस्तुमात्रे न्यायं योजयन्ति। सप्तानामस्तित्वादीनां भङ्गीनां समाहारः सप्तभङ्गी तस्या

**नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यश्च स्यान्नास्ति चावक्तव्यश्च स्यादस्ति च नास्ति चावक्तव्यश्चेत्येवमेवैकत्वनित्यत्वादिष्वपीमं सप्तभङ्गीनयं योजयन्ति, अत्राचक्ष्महे, नायमभ्युपगमो युक्त इति। कुतः**

नयो न्यायः" घटादेर्हि सर्वात्मना सदेकरूपत्वे प्राप्यात्मनाप्यस्त्येव स इति तत्प्राप्तये यत्नो न स्यादतो घटत्वादिरूपेण कथञ्चिदस्ति, प्राप्यत्वादिरूपेण कथञ्चिन्नास्तीत्येवमनेकरूपत्वं वस्तुमात्रस्यास्थेयमिति भावः। के ते सप्तभङ्गास्तानाह॥ स्यादस्तीति॥ स्यादित्यव्ययं तिङन्तप्रतिरूपकं कथञ्चिदर्थकं स्यादस्ति कथञ्चिदस्तीत्यर्थः, एवमग्रेऽपि। तत्र वस्तुनोऽस्तित्ववाञ्छायां स्यादस्तीत्याद्यो भङ्गः। प्रवर्त्तनास्तित्ववाञ्छायां स्यान्नास्तीति द्वितीयो भङ्गः। क्रमेणोभयवाञ्छायां स्यादस्ति नास्ति चेति तृतीयो भङ्गः। युगपदुभयवाञ्छायां अस्ति नास्तीति शब्दद्वयस्य सकृद्वक्तुमशक्यत्वात् स्यादवक्तव्यत्वं चतुर्थो भङ्गः। आद्यचतुर्थभङ्गयोर्वाञ्छायां स्यादस्ति चावक्तव्यश्चेति पञ्चमो भङ्गः। द्वितीयचतुर्थेच्छायां स्यान्नास्ति चावक्तव्यश्चेति षष्ठो भङ्गः। तृतीयचतुर्थेच्छायां स्यादस्ति नास्ति चावक्तव्यश्चेति सप्तमो भङ्ग इति विभागः। एवमेकत्वमनेकत्वं चेति द्वयमादाय स्यादेकः स्यादनेकः स्यादेकोऽनेकश्च स्यादवक्तव्यः स्यादेकोवक्तव्यः स्यादनेकोऽवक्तव्यः स्यादेकोऽनेकश्चावक्तव्यश्चेति, तथा स्यान्नित्यः स्यादनित्य इत्याद्यूह्यं। एवमनेकरूपत्वेन वस्तुनि प्राप्तित्यागादिव्यवहारः सम्भवति एकरूपत्वे सर्वं सर्वत्र सर्वदास्त्येवेति व्यवहारविलोपापत्तिः स्यात्, तस्मादनेकान्तं सर्वमित्येकरूपब्रह्मवादबाध इति प्राप्ते सिद्धान्तयति॥ अत्रेति॥ यदस्ति तत् सर्वत्र सर्वदास्त्येव यथा ब्रह्मा-

एकस्मिन्नसम्भवात्। न ह्येकस्मिन् धर्मिणि युगपत् सदसत्त्वादिविरुद्धधर्मसमावेशः सम्भवति शीतोष्णवत्। ये एते सप्त पदार्था निर्धारिता एतावन्त एवंरूपाश्चेति ते तथैव वा स्युः नैव वातथा स्युः इतरथा हि तथा वा स्युः अतथा वेत्यनिर्धारितरूपं ज्ञानं संशयज्ञानवदप्रमाणमेव स्यात्। नन्वनेकात्मकं वस्त्विति निर्द्धारितरूपमेव ज्ञानमुत्पद्यमानं संशयज्ञानवन्नाप्रमाणं भवितुमर्हति, नेति ब्रूमः। निरङ्कुशं ह्यनेकान्तं स-

त्मा। न चैवं तत्प्राप्तये यत्नो न स्यादिति वाच्यं, अप्राप्तिभ्रान्त्या यत्नसम्भवात्। यन्नास्ति तन्नास्त्येव यथा शशविषाणादि, प्रपञ्चस्तु उभयविलक्षण एवेत्येकान्तवाद एव युक्तो नानेकान्तवादः। तथा हि किं येनाकारेण वस्तुनः सत्त्वं तेनैवाकारेणासत्त्वमुताकारान्तरेण, द्वितीये वस्तुन आकारान्तरमेवासदिति वस्तुनः सदेकरूपत्वमेव, न हि दूरस्य ग्रामस्य प्राप्तेरसत्त्वे ग्रामोऽप्यसम्भवति, प्राप्त्यासत्त्वे प्राप्तियत्नानुपपत्तेः, अतो यथा व्यवहारं प्रपञ्चस्यैकरूपत्वमास्थेयं नाद्य इत्याह॥ नायमिति॥ ननु विमतमनेकात्मकं वस्तुत्वान्नारसिंहवदिति चेत्, न, घट इदानीमस्त्येवेत्यनुभवबाधात्। किञ्च जीवादिपदार्थानां सप्तत्वं जीवत्वादिरूपं चास्त्येव नास्त्येवेति च नियतं वोतानियतं, आद्ये व्यभिचार इत्याह॥ य इति॥ द्वितीये पदार्थनिश्चयो न स्यादित्याह॥ इतरथेति॥ अनेकान्तं सर्वमित्येव निश्चय इति शङ्कते॥ नन्विति॥ तस्य निश्चयरूपत्वं नियतमनियतं वा आद्ये वस्तुत्वस्य तस्मिन्नैवैकरूपनिश्चये व्यभिचारः, द्वितीये तस्य संशयत्वं स्यादित्याह॥ नेति ब्रू-

र्वंवस्तुषु प्रतिजानानस्य निर्द्धारणस्यापि वस्तुत्वाविशेषात् स्यादस्ति स्यान्नास्तीत्यादिविकल्पोपनिपातादनिर्धारणात्मकतैव स्यात्, एवं निर्द्धारयितुर्निर्द्धारणफलस्य च स्यात् पक्षेऽस्तिता स्याच्च पक्षे नास्तितेति, एवं सति कथं प्रमाणभूतः संस्तीर्थंकरः प्रमाणप्रमेयप्रमातृप्रमितिष्वनिर्द्धारितासूपदेष्टुं शक्नुयात्, कथं वा तदभिप्रायानुसारिणस्तदुपदिष्टेऽर्थेऽनिर्धारितरूपे प्रवर्तेरन्। ऐकान्तिकफलत्वनिर्धारणे हि सति तत्साधनानुष्ठानाय सर्वो लोकोऽनाकुलः प्रवर्तते नान्यथा, अतश्चानिर्धारितार्थं शास्त्रं प्रणयन् मत्तोन्मत्तवदनुपादेयवचनः स्यात्। तथा पञ्चानामस्तिकायानां पञ्चत्वसङ्ख्याऽस्ति वा नास्ति वेति विकल्प्यमाना स्यात् तावदेकस्मिन् पक्षे पक्षान्तरे तु न स्यादित्यतो न्यूनसङ्ख्यात्वमधिकसंख्यात्वं वा प्राप्नुयात्। न चै-

म इति ॥ प्रमायामुक्तन्यायं प्रमात्रादावतिदिशति ॥ एवमिति ॥ निर्धारणं फलं यस्य प्रमाणादेस्तस्येत्यर्थः। इत्येवं सर्वत्रानिर्धारणे सत्युपदेशो निष्कम्पप्रवृत्तिश्च न स्यादित्याह ॥ एवं सतीति ॥ अनेकान्तवादे अस्तिकायपञ्चत्वमपि न स्यादित्याह ॥ तथा पञ्चानामिति ॥ यदुक्तमवक्तव्यत्वं तत् किं केनापि शब्देनावाच्यत्वं उत सकृदनेकशब्दावाच्यत्वं, नाद्यः व्याघातादित्याह ॥ न चैषामिति ॥ उच्यन्ते चा-

षां पदार्थानामवक्तव्यत्वं सम्भवति अवक्तव्याश्चेन्नोच्चेरन् उच्यन्ते चावक्तव्याश्चेति विप्रतिषिद्धं । उच्यमानाश्च तथैवावधार्यन्ते नावधार्यन्त इति च, तथा तदवधारणफलं सम्यग्दर्शनमस्ति वा नास्ति वा, एवं तद्विपरीतमसम्यग्दर्शनमप्यस्ति वा नास्ति वेति प्रलपन्मत्तोन्मत्तपक्षस्यैव स्यात् । न प्रत्यायितस्य पक्षस्य स्वर्गापवर्गयोश्च पक्षे भावः पक्षे चाभावस्तथा पक्षे नित्यता पक्षे चानित्यतेत्यनवधारणायां प्रवृत्त्यनुपपत्तिः । अनादिसिद्धजीवप्रभृतीनां च स्वशास्त्रावधृतस्वभावानामयथावधृतस्वभावत्वप्रसङ्गः । एवं जीवादिषु पदार्थेष्वेकस्मिन् धर्मिणि सत्त्वासत्त्वयोर्विरुद्धयोर्धर्मयोरसम्भ-

वक्तव्यादिपदैरिति शेषः । न द्वितीयः सकृदेकवक्तृमुखजानेकशब्दानामप्रसिद्धेर्निषेधायोगात् शेषस्यापि मुखभेदात् । न चार्थस्य युगपद्विरुद्धधर्मवाञ्छायां वक्तुर्मूकत्वमात्रमवक्तव्यपदेन विवक्षितमिति वाच्यं, तादृशवाञ्छाया एवानुत्पत्तेरिति । किञ्च विरुद्धानेकप्रलापित्वादर्हन्ननाप्त इत्याह ॥ उच्यमानाश्चेत्यादिना ॥ इति च प्रलपन्नित्यन्वयः । अर्हन्निति शेषः । अनाप्तपक्षस्यैवान्तर्गतः स्यान्नाप्तपक्षस्येत्यर्थः । इतश्चासङ्गतोऽनेकान्तवाद इत्याह ॥ स्वर्गेति ॥ किञ्चानादिसिद्धोऽर्हन्मुनिः । अन्ये तु हेत्वनुष्ठानान्मुच्यन्ते, अननुष्ठानाद्बध्यन्त इत्यार्हततन्त्रावधृतस्वभावानां त्रिविधजीवानां त्रैविध्यनियमोऽपि न स्यादित्याह ॥ अनादीति ॥ प्रपञ्चितं सूत्रार्थं निगमयति॥ एवमिति॥

वात् सत्त्वे चैकस्मिन् धर्मेऽसत्त्वस्य धर्मान्तरस्यासम्भवात् असत्त्वे चैवं सत्त्वस्यासम्भवादसङ्गतमिदमार्हतं मतं। एतेनैकानेकनित्यानित्यव्यतिरिक्ताव्यतिरिक्ताद्यनेकान्ताभ्युपगमा निराकृता मन्तव्याः। यत्तु पुद्गलसंज्ञकेभ्योऽणुभ्यः सङ्घाताः सम्भवन्तीति कल्पयन्ति तत् पूर्वेणैवाणुवादनिराकरणेन निराकृतं भवतीत्यतो न पृथक् तन्निराकरणाय प्रयत्यते॥३३॥

## एवं चात्माऽकार्त्स्न्यम्॥ ३४॥

यथैकस्मिन् धर्मिणि विरुद्धधर्मासम्भवो दोषः स्याद्वादे प्रसक्तः एवमात्मनोऽपि जीवस्याकार्त्स्न्यमपरो दोषः प्रसज्येत। कथं शरीरपरिमाणो हि जीव इत्यार्हता मन्यन्ते। शरीरपरिमाणतायां च सत्यामकृत्स्नोऽसर्वगतः परिच्छिन्न आत्मेत्यतो घटादिवदनित्यत्वमात्मनः प्रसज्येत। शरीराणां चानवस्थितपरिमाणत्वान्मनुष्यजीवो मनुष्यशरीरपरिमाणो भूत्वा पुनः

॥एतेनेति॥सत्त्वासत्त्वयोरेकत्र निरासेनेत्यर्थः। परमाणुसंघाताः पृथिव्यादय इति दिगम्बरसिद्धान्तः किमिह सूत्रकृतोपेक्षितस्तत्राह॥ यत्त्विति॥ ३३॥

जीवस्य देहपरिमाणतां दूषयति॥ एवं चेति॥ अकार्त्स्न्यं मध्यमपरिमाणत्वं तेनानित्यं स्यादित्यर्थः। अर्थान्तरमाह॥ शरीराणां चे-

केनचित् कर्मविपाकेन हस्तिजन्म प्राप्नुवन्न कृत्स्नं हस्तिशरीरं व्याप्नुयात्, पुत्तिकाजन्म च प्राप्नुवन्न कृत्स्नपुत्तिकाशरीरे सम्मीयेत। समान एष एकस्मिन्नपि जन्मनि कौमारयौवनस्थाविरेषु दोषः। स्यादेतत्, अनन्तावयवो जीवस्तस्य त एवावयवा अल्पे शरीरे सङ्कुचेयुर्महति च विकासेयुरिति। तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिविहन्यते वा न वेति वक्तव्यं। प्रतिघाते तावन्नानन्तावयवाः परिच्छिन्ने देशे सम्मीयेरन्। अप्रतिघातेऽप्येकावयवदेशत्वोपपत्तेः सर्वेषामवयवानां प्रथिमानुपपत्तेः जीवस्याणुमात्रप्रसङ्गः स्यात्। अपि च शरीरमा-

ति ॥ विपाकः कर्मणामभिव्यक्तिर्जीवस्य कृत्स्नगेजशरीराव्यापित्वमकात्स्न्यें शरीरैकदेशो निर्जीवः स्यादित्यर्थः पुत्तिकादेहे कृत्स्नो जीवो न प्रविशेत् देहाद्बहिरपि जीवः स्यादित्यर्थः। किञ्च बालदेहमात्र आत्मा ततः स्थूले युवदेहे क्वचित् स्यादिति कृत्स्नदेहः सजीवो न स्यादित्याह ॥ **समान इति** ॥ यथा दीपावयवानां घटे सङ्कोचो गेहे विकासस्तथा जीवावयवानामिति। देहमानत्वनियमं शङ्कते ॥ **स्यादिति** ॥ दीपांशवज्जीवांशा भिन्नदेशा एकदेशा वेति विकल्प्याद्येऽल्पदेहाद्बहिरपि जीवः स्यादिति दूषयति ॥ **तेषामित्यादिना** ॥ दीपस्य तु न घटाद्बहिः सत्त्वं अधिकावयवानां विनाशात्। द्वितीयं दूषयति ॥ **अप्रतिघात इति** ॥ अवयवानां नित्यत्वं चासिद्धं अल्पत्वाद्दीपांशवदित्याह ॥ **अपि चेति** ॥ ३४ ॥

त्रपरिच्छिन्नानां जीवावयवानामानन्त्यं नोत्प्रेक्षितुमपि शक्यम् ॥ ३४ ॥

अथ पर्यायेण बृहच्छरीरप्रतिपत्तौ केचिज्जीवावयवा उपगच्छन्ति तनुशरीरप्रतिपत्तौ च केचिदपगच्छन्ति इत्युच्येत तत्राप्युच्यते ॥

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

न च पर्यायेणाप्यवयवोपगमापगमाभ्यामेतद्देहपरिमाणत्वं जीवस्याविरोधेनोपपादयितुं शक्यते। कुतः विकारादिदोषप्रसङ्गात्। अवयवोपगमापगमाभ्यां ह्यनिशमापूर्यमाणस्यापक्षीयमाणस्य च जीवस्य विक्रियावत्त्वं तावदपरिहार्यं, विक्रियावत्त्वे च चर्मादिवदनित्यत्वं प्रसज्येत, ततश्च बन्धमोक्षाभ्युपगमो बाध्येत, कर्माष्टकपरिवेष्टितस्य जीवस्यालाबुवत् संसार-

एवं जीवावयवा नित्या इति मते देहमानत्वं निरस्तं, सम्प्रति जीवस्य केचिदेव कूटस्था अवयवा अन्ये त्वागमापायिन इति शङ्कते ॥ अथेति ॥ बृहत्तनुकायाप्तौ जीवस्यावयवागमोपायाभ्यां देहमानत्वमित्यर्थः ॥ सूत्रेण परिहरति ॥ न चेति ॥ आगमापायौ पर्यायः। किमागमापायिनामवयवानामात्मत्वमस्ति न वा, आद्ये आह ॥ विकारादिदोषेति ॥ कोऽसौ बन्धमोक्षाभ्युपगम इत्यत आह ॥ कर्माष्टकेति ॥ व्याख्यातमेतत्, आद्यकल्पे दोषान्तरं वदन् कल्पान्त-

सागरे निमग्नस्य बन्धनोच्छेदादूर्ध्वगामित्वं भवतीति। किञ्चान्यदागच्छतामपगच्छतां चावयवानामागमापायिधर्मवत्वादेवानात्मत्वं शरीरादिवत्। ततश्चावस्थितः कश्चिदवयव आत्मेति स्यात् न च स निरूपयितुं शक्यते अयमसाविति। किंचान्यदागच्छन्तश्चैते जीवावयवाः कुतः प्रादुर्भवन्ति अपगच्छन्तश्च क्व वा नीयन्त इति वक्तव्यं। न हि भूतेभ्यः प्रादुर्भवेयुः भूतेषु च निलीयेरन् अभौतिकत्वाज्जीवस्य। नापि कश्चिदन्यः साधारणोऽसाधारणो वा जीवानामवयवाधारो निरूप्यते प्रमाणाभावात्। किंचान्यदनवधृतस्वरूपश्चैवं सत्यात्मा स्यात् आगच्छतामपगच्छतां चावयवानामनियतपरिमाणत्वात्, अत

रमादाय दूषयति ॥ किञ्चेति ॥ अवशिष्टकूटस्थावयवस्य दुर्ज्ञानत्वादात्मज्ञानाभावान्न मुक्तिरित्यर्थः। यथा दीपावयवानां आकारस्तेजस्तथात्मावयवानामाकारकारणाभावान्नागमापायौ युक्तावित्याह ॥ किञ्चेति॥ सर्वजीवसाधारणः प्रतिजीवमसाधारणो वेत्यर्थः किञ्चात्मन आगमापायिशीलावयवत्वे सति कियन्त आयान्त्यवयवाः कियन्तोऽपयन्तीत्यज्ञानादात्मनिश्चयाभावादनिर्मोक्षः स्यादित्याह ॥ किंचेति ॥ अपि चावयवारब्धावयवित्वे जीवस्यानित्यत्वं अवयवसमूहत्वे चासत्त्वं आत्मत्वस्य यावदवयववृत्तित्वे यत्किञ्चिदवयवापायेऽपि सद्यः शरीरस्याचेतनत्वं गोत्ववत् प्रत्येकं समाप्तौ एकस्मिन् शरीर आत्मनानात्वं स्यादतो न देहपरिमाणत्वसावयवत्वे आत्मन इत्युपसंहरति ॥ अत-

एवमादिदोषप्रसङ्गात् न पर्यायेणाप्यवयवोपगमापगमावात्मन आश्रयितुं शक्येते। अथ वा पूर्वेण सूत्रेण शरीरपरिमाणस्यात्मन उपचितापचितशरीरान्तरप्रतिपत्तावकार्त्स्न्यप्रसञ्जनद्वारेणानित्यतायां चोदितायां पुनः पर्यायेण परिमाणानवस्थानेऽपि स्रोतःसन्ताननित्यतान्यायेनात्मनो नित्यता स्यात्, यथा रक्तपटादीनां विज्ञानानवस्थानेऽपि तत्सन्ताननित्यता तद्वद्विसिचामपीत्याशङ्क्यानेन सूत्रेणोत्तरमुच्यते। सन्तानस्य तावदवस्तुत्वे नैरात्म्यवादप्रसङ्गो वस्तुत्वेऽप्यात्मनो विकारादिदोषप्रसङ्गादस्य पक्षस्यानुपपत्तिरिति॥ ३५॥

इति॥ सूत्रस्यार्थान्तरमाह॥ अथ वेति॥ स्थूलसूक्ष्मशरीरप्राप्तावकार्त्स्न्योक्तिद्वारेणात्मानित्यतायामुक्तायां सुगतवत् सन्तानरूपेणात्मनित्यतामाशङ्क्यानेनोत्तरमुच्यत इत्यन्वयः। पर्यायेणेत्यस्य व्याख्या स्रोत इति देहभेदेन परिमाणस्यात्मनश्चानवस्थानेऽपि नाशेपि स्रोतः प्रवाहस्तदात्मकस्यात्मव्यक्तिसन्तानस्य नित्यतयात्मनित्यता स्यादित्यत्र दृष्टान्तमाह॥यथेति॥सिग्वस्त्रं विगतं येभ्यस्ते विसिचो दिगम्बरास्तेषामित्यर्थः। पर्यायात् सन्तानादप्यात्मनित्यत्वस्याविरोध इति नच कुतः, विकारादिभ्यः सन्तानस्यावस्तुन आत्मत्वे शून्यवादः सन्तानस्य वस्तुत्वे सन्तानव्यतिरेके च कूटस्थात्मवादः, अनतिरेके जन्मादिविकारो विनाशो मुक्त्यभाव इत्युक्तदोषसङ्गात् सन्तानात्मपक्षोऽनुपपन्न इति सूत्रार्थः॥ ३५॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

अपि चान्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैस्तद्वत् पूर्वयोरप्याद्यमध्यमयोर्जीवपरिमाणयोर्नित्यत्वप्रसङ्गात् अविशेषप्रसङ्गः स्यात् एकशरीरपरिमाणतैव स्यात् नोपचितापचितशरीरान्तरप्राप्तिः । अथ चान्त्यस्य जीवपरिमाणस्यावस्थितत्वात्

यं स्थूलं वा सूक्ष्मं वा देहं गृह्णाति तद्देहपरिमाण एव जीव इति नियमं दूषयति ॥ अन्त्येति ॥ अन्त्यशरीरपरिमाणस्यावस्थितेर्नित्यत्वदर्शनादुभयोराद्यमध्यमपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषस्त्रयाणां नित्यपरिमाणानां साम्यं स्याद्विरुद्धपरिमाणानामेकत्रायोगादिति सूत्रयोजना । आद्यमध्यमपरिमाणे नित्ये आत्मपरिमाणत्वादत्यन्तपरिमाणवत् । नचाप्रयोजकता, परिमाणनाशे सत्यात्मनोऽपि नाशादन्त्यपरिमाणनित्यत्वायोगादिति भावः। परिमाणत्रयसाम्यापादानफलमाह ॥ एकेति ॥ अन्त्यशरीरसमान्येव पूर्वशरीराणि स्युः विषमशरीरप्राप्तावात्मनस्तत्परिमाणत्वे परिमाणत्रयसाम्यानुमानविरोधादित्यर्थः। पूर्वं कालत्रये परिमाणत्रयमङ्गीकृत्यान्त्यदृष्टान्तेन नित्यत्वमनुमाय साम्यमापादितं, सम्प्रत्यन्त्यस्य मुक्तपरिमाणस्याणुत्वस्थूलत्वयोरन्यतरत्वेनावस्थितेस्तदेवान्त्यमाद्यमध्यमकालयोरपि नित्यत्वात् स्यात् प्रागसतोऽनित्यत्वायोगात्, तथा चाविशेषः कालत्रयेऽपि जीवपरिमाण भेद इत्याह ॥ अथ चेति ॥ तस्माद् आन्त्येकश[?]क्षपणकसिद्धान्तेनाविरोधः स-

पूर्वयोरप्यवस्थयोरवस्थितपरिमाण एव जीवः स्यात्। ततश्चाविशेषेण सर्वदैवाणुर्महान् वा जीवोऽभ्युपगन्तव्यो न शरीरपरिमाणः, अतश्च सौगतवदार्हतमपि मतमसङ्गतमित्युपेक्षितव्यम् ३६

## पत्युरसामञ्जस्यात् ॥ ३७॥

इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रतिषिध्यते। तत् कथमवगम्यते, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादभिध्योपदेशाच्चेत्यत्र प्रकृतिभावेनाधिष्ठातृभावेन चोभयस्वभावस्येश्वरस्य स्वयमेवाचार्येण प्रतिष्ठापितत्वात्। यदि पुनरविशेषेणेश्वरकारणवादमात्रमिह प्रतिषिध्येत पूर्वोत्तरविरोधाद्व्याहताभिव्याहारः सूत्रकार इत्येतदापद्येत। तस्मादप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वर इत्येष पक्षो वेदान्तविहितब्रह्मैकत्वप्रतिपक्षत्वात् यत्नेनात्र प्रतिषिध्यते। सा चेयं वेदबाह्येश्वरकल्पनाऽनेकप्रकारा। केचित्ता-

मन्वयस्येति सिद्धम्॥ ३६ ॥

पत्युरसामञ्जस्यात् ॥ लुञ्चितकेशमतनिरासानन्तरं जटाधारिशैवमतं बुद्धिस्थं निराक्रियते इति प्रसङ्गसङ्गतिमाह ॥ इदानीमिति ॥ सामान्यत ईश्वरनिरास एवात्र किं न स्यादिति शङ्कते ॥ तदिति ॥ स्वोक्तिविरोधान्मैवमित्याह॥ प्रकृतिश्चेत्यादिना ॥ प्रतिष्ठापितत्वात् केवलनिमित्तेश्वरप्रतिषेधोऽवगम्यत इत्यन्वयः व्याहतो विरुद्धोऽभिव्याहा-

वत् साङ्ख्ययोगव्यपाश्रयाः कल्पयन्ति प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वरः इतरेतरविलक्षणाः प्रधानपुरुषेश्वरा इति । माहेश्वरास्तु मन्यन्ते कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः, पशुपतिरीश्वरो निमित्तकारणमिति वर्णयन्ति । तथा वैशेषिकादयोऽपि केचित् कथञ्चित् स्वप्रक्रियानुसारेण निमित्तका-

र उक्तिर्यस्य स तथा। अद्वितीयब्रह्मप्रकृतिकं जगदिति वदतो वेदान्तसमन्वयस्य कर्तैवेश्वरो न प्रकृतिरिति शैवादिमतेन विरोधोऽस्ति न वेति सन्देहे तन्मतस्य मानमूलत्वाद्विरोधे सति वेदान्तोक्ताद्वयब्रह्मासिद्धिरिति फलमभिप्रेत्य सत्त्वासत्त्वयोरेकत्रासम्भववत् कर्तृत्वोपादानत्वयोरप्येकत्रासम्भवात् कर्तैवेश्वर इति पूर्वपक्षं कुर्वन्नवान्तरमतभेदमाह ॥ सा चेति ॥ सेश्वराः साङ्ख्याः, साङ्ख्यशब्दार्थः, चत्वारो माहेश्वराः शैवाः पाशुपताः कारुणिकसिद्धान्तिनः कापालिकाश्चेति । सर्वेऽप्यमी महेश्वरप्रोक्तागमानुगामित्वान्माहेश्वरा उच्यन्ते । कार्यं महदादिकं, कारणं प्रधानं ईश्वरश्च, योगः समाधिः, विधिः त्रिसवनस्नानादिः, दुःखान्तो मोक्षः इति पञ्च पदार्थाः । पशवो जीवास्तेषां पाशो बन्धस्तन्नाशायेत्यर्थः पाशुपतागमप्रामाण्यात् पशुपतिर्निमित्तमेवेति मतमुक्त्वाऽऽनुमानिकेश्वरमतमाह ॥ तथेति ॥ विमतं सकर्तृकं कार्यत्वात् घटवदिति वैशेषिकाः कर्तारमीश्वरं साधयन्ति, कर्मफलं सपरिकराभिज्ञदातृकं कालान्तरभावि फलत्वात् सेवाफलवदिति गौतमा दिगम्बराश्च । ज्ञानैश्वर्योत्कर्षः क्वचिद्विश्रान्तः सातिशयत्वात्

१ सवनशब्दःकालवचनः ।

रणमीश्वरमिति। अत उत्तरमुच्यते। पत्युरसाम-ञ्जस्यादिति। पत्युरीश्वरस्य प्रधानपुरुषयोर-धिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते, कस्मा-दसामञ्जस्यात्। किं पुनरसामञ्जस्यं। हीनम-

परिमाणवदिति साङ्ख्यसौगतपातञ्जला इति मत्वोक्तं॥ केचित् कथ-ञ्चिदिति॥ सिद्धान्तयति॥ अत इति॥ आगमादिना निर्दोषेश्वर-सिद्धेः कथं दोषवत्त्वमित्याह॥ किमिति॥ न तावत् स्वस्वागमा-दीश्वरनिर्णयः आगमानां निर्मूलत्वेनाप्रामाण्यात्। न च सर्वज्ञज्ञानं मूलं तत्र मानाभावात्। न चागम एव मानं, आगममानत्वनिश्चये मूलनिश्चयस्तन्निश्चये तन्निश्चय इत्यन्योऽन्याश्रयात्। न च पुरुषवच-सां स्वतो मानत्वं युक्तं, मिथो विरोधेन तत्त्वाव्यवस्थानाच्च, नाप्य-नुमानादीश्वरः सर्वज्ञ कर्तैवेति निर्णयः सम्भवति, अनुमानस्य दृष्टा-नुसारित्वेन दृष्टविपरीतार्थासाधकत्वात्। तथा च लोके यादृशाः कर्ता-रो दृष्टास्तादृशा एव जगत्कर्तारो रागद्वेषादिमन्तः सिध्येयुः। यदि लो-के विचित्रप्रासादादिकर्तुरेकत्वाद्यदर्शनेऽपि जगत्कर्तरि लाघवादेकत्वं नित्यज्ञानं निर्दोषत्वं च कल्प्येत, तर्हि द्रव्योपादानत्वमपि कल्प्यतां, कर्तुरेवोपादानत्वेन लाघवात्, अन्यथा स्वतन्त्रप्रधानपरमाण्वाद्युपा-दानकल्पनागौरवात्, अदृष्टत्वाच्चेत् कर्तुर्द्रव्योपादानत्वसिद्धेरेकत्वा-दिकमपि न सिध्येत्। अस्माकन्त्वपौरुषेयतया स्वतःसिद्धप्रमाणभा-वया श्रुत्या स्वप्रमेयबोधने दृष्टान्तानपेक्षया भवत्येव लौकिककर्तृवि-परीताद्वितीयकर्त्रुपादानात्मकसर्वज्ञनिर्दोषेश्वरनिर्णयः। निर्णीते च तस्मिन् धर्मिग्राहकमानाबाधान्न रागादिदोषापादानस्यावकाशः इत्या-नुमानिकेश्वरादिभ्यो वैषम्यं, तदभिप्रेत्याश्रौतस्येश्वरस्यासामञ्जस्यमाह ॥ हीनेति ॥ यदि कर्तुरुपादानत्वमदृष्टत्वान्न कल्प्यते तर्हि निर्दोषत्व-

ध्यमोत्तमभावेन हि प्राणिभेदान् विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत। प्राणिकर्मापेक्षितत्वाददोष इति चेत्, न कर्मेश्वरयोः प्रवर्त्यप्रवर्तयितृत्वे इतरेतराश्रयदोषप्रसङ्गात्। अनादित्वादिति चेत्, न, वर्तमानकालवदतीतेष्वपि कालेष्वितरेतराश्रय-

स्याप्यदृष्टत्वात् यो विषमकारी स दोषवानिति व्याप्तिदृष्टेश्च[1] जगत्कर्ता दोषवान् स्यात्। न चात्र धर्मिग्राहकानुमानबाधः कार्यत्वलिङ्गस्य कर्तृमात्रसाधकत्वेन निर्दोषत्वादावुदासीनत्वात् न चोत्कर्षसमा जातिर्व्यापकधर्मापादानात् दोषाभावे तद्व्याप्यविषमकर्तृकत्वायोगाच्च, दृष्टान्तस्थाव्यापकधर्माणां पक्षे आपादनं ह्युत्कर्षसमा जातिर्यथा-शब्दो यदि कृतकत्वेन हेतुना घटवदनित्यः स्यात् तर्हि तेनैव हेतुना सावयवोऽपि स्यादिति। न ह्यत्रानित्यत्वस्य व्यापकं सावयवत्वं गन्धादौ व्यभिचारादिति भावः। ननु प्राणिकर्मप्रेरित ईश्वरो विषमफलान् प्राणिनः करोति न स्वेच्छयेति शङ्कते॥ प्राणीति॥ जडस्य कर्मणः प्रेरकत्वायोगान्मैवमित्याह॥ नेति॥ न चेश्वरप्रेरितं कर्मेश्वरस्य प्रेरकमिति वाच्यमित्याह॥ कर्मेति॥ अतीतकर्मणा प्रेरित ईश्वरो वर्तमानं कर्म तत्फलाय प्रेरयतीत्यनादित्वात् प्रेर्यप्रेरकभावस्य नानुपपत्तिरिति शङ्कते॥ अनादित्वादिति॥ अतीतकर्मणोऽपि जडत्वान्नेश्वरप्रेरकता न च तदपीश्वरेण प्रेरितं सदीश्वरं प्रेरयति उक्तान्योऽन्याश्रयात्ततोऽप्यतीतकर्मप्रेरितेश्वरप्रेरितं तदेवेश्वरं वर्तमाने कर्मणि फलदानाय प्रेरयतीति चेन्न मानहीनाया मूलक्षयावहाया अनवस्थायाः प्रसङ्गादतः कर्मनिरपेक्ष एवेश्वरो विषमसृष्टेत्यसामञ्जस्यं दुर्वार-

---

१ व्याप्तिदर्शनादित्यर्थः।

दोषाविशेषादन्धपरम्परान्यायापत्तेः। अपि च प्रवर्तनालक्षणा दोषा इति न्यायवित्समयः। न हि कश्चिददोषप्रयुक्तः स्वार्थे परार्थे वा प्रवर्तमानो दृश्यते। स्वार्थे प्रयुक्त एव च सर्वो जनः परार्थेऽपि प्रवर्तत इत्येवमप्यसामञ्जस्यं, स्वार्थवत्त्वादीश्वरस्यानीश्वरत्वप्रसङ्गात्। पुरुषविशेषत्वाभ्युपगमाच्चेश्वरस्य पुरुषस्य चौदासीन्याभ्युपगमादसामञ्जस्यम्॥ ३७॥

## सम्बन्धानुपपत्तेश्च॥ ३८॥

पुनरप्यसामञ्जस्यमेव, न हि प्रधानपुरुष-

मित्यर्थः। यत्तु फलदानं ईश्वरस्य कर्मनिमित्तमात्रं न प्रेरकमिति नोक्तदोष इति, तन्न, विषमकर्म कारयितुरीश्वरस्य दोषवत्त्वानपायात्, पूर्वकर्मापेक्षया कर्मकारयितृत्वे चोक्ताप्रामाणिकानवस्थानात्, अस्माकं त्वेषह्येव साध्वसाधु कारयतीति निरवद्यमिति च श्रुतिमूलं पूर्वकर्मापेक्षया कल्पनमिति वैषम्यं। किञ्च परमतानुसारेणापीश्वरस्य रागादिमत्त्वं प्राप्नोतीत्याह॥ अपि चेति॥ प्रवर्तकत्वलिङ्गा दोषा इति तार्किकाणां स्थितिः, तथा चेश्वरः स्वार्थरागादिमान् प्रवर्तकत्वात् सम्मतवत्। न च कारुणिके व्यभिचारः परदुःखप्रयुक्तस्वदुःखनिवृत्त्यर्थित्वात्तस्येत्यर्थः। उदासीनः प्रवर्तक इति च व्याहतमिति योगान् प्रत्याह॥ पुरुषेति॥ ३७॥

प्रधानवादे दोषान्तरमाह सूत्रकारः॥ सम्बन्धेति॥ ईश्वरेणासम्बद्धस्य प्रधानादेः प्रेर्यत्वायोगात् सम्बन्धो वाच्यः, स च संयोगः समवायो वा नाऽस्तीत्यर्थः। कार्यबलात् प्रेरणयोग्यत्वाख्यः सम्बन्धः क-

व्यतिरिक्त ईश्वरोऽन्तरेण सम्बन्धं प्रधानपुरुषावीशीत। न तावत् संयोगलक्षणः सम्बन्धः सम्भवति, प्रधानपुरुषेश्वराणां सर्वगतत्वान्निरवयवत्वाच्च। नापि समवायलक्षणः सम्बन्धः आश्रयाश्रयिभावानिरूपणात्। नाप्यन्यः कश्चित् कार्यगम्यः सम्बन्धः शक्यते कल्पयितुं, कार्यकारणभावस्यैवाद्याप्यसिद्धत्वात्। ब्रह्मवादिनः कथमिति चेत्, न, तस्य तादात्म्यलक्षणसम्बन्धोपपत्तेः। अपि चागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यमिति नियमोऽस्ति, परस्य तु दृष्टान्तबलेन कारणादिस्वरूपं निरूपयतो यथादृष्टमेव सर्वमभ्युपगन्तव्यमित्ययमस्त्यतिशयः। परस्यापि सर्वज्ञप्रणीतागमसद्भावात् समानमागमबलमिति चेत्, न, इतरेतराश्रयप्रसङ्गात् आगमप्रत्ययात् सर्वज्ञत्वसिद्धिः स-

ल्प्यतामित्यत आह ॥ नाप्यन्य इति ॥ ईश्वरप्रेरितप्रधानकार्यं जगदिति सिद्धं चेत् सम्बन्धकल्पना स्यात्, तच्चाद्याप्यसिद्धमित्यर्थः। मायाब्रह्मणोस्त्वनिर्वाच्यतादात्म्यसम्बन्धः, देवात्मशक्तिमिति श्रुतेः। किंच वेदस्यापूर्वार्थत्वान्न लोकदृष्टमृत्कुलालसम्बन्धो वैदिकेनानुसर्तव्यः। आनुमानिकेन त्वनुसर्तव्यः इति विशेषमाह ॥ अपि चेति ॥ सर्वज्ञस्यागमप्रामाण्यस्य च ज्ञप्तावन्योन्याश्रयः अनुमानात् सर्वज्ञसि-

र्वज्ञप्रत्ययाच्चागमसिद्धिरिति, तस्मादनुपपन्ना साङ्ख्ययोगवादिनामीश्वरकल्पना । एवमन्यास्वपि वेदबाह्यास्वीश्वरकल्पनासु यथासम्भवमसामञ्जस्यं योजयितव्यम् ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि परिकल्प्यमानः कुम्भकार इव मृदादीनि प्रधानान्यधिष्ठाय प्रवर्तयेत् । न चैवमुपपद्यते । न ह्यप्रत्यक्षं रूपादिहीनं च प्रधानमीश्वरस्याधिष्ठेयं सम्भवति, मृदादिवैलक्षण्यात् ॥ ३९ ॥

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

स्यादेतत्, यथा करणग्रामं चक्षुरादिकमप्रत्यक्षं रूपादिहीनं च पुरुषोऽधितिष्ठति, एवं प्र-

द्धेर्निरस्तत्वात्, न ह्यमनस्कस्य ज्ञानं संभवति ज्ञानं मनोजन्यमिति व्याप्तिविरोधान्नित्यज्ञानकल्पनाऽनवकाशादिति भावः । प्रधानवत् परमाणूनामपि निरवयवेश्वरेण संयोगाद्यसत्त्वात् प्रेर्यत्वायोगः, प्रेरकत्वे चेश्वरस्य दोषवत्त्वमित्याह ॥ एवमन्यास्वपीति ॥ ३८ ॥

ईश्वरस्य प्रधानादिप्रेरणानुपपत्तेश्च, सामञ्जस्यमित्याह सूत्रकारः ॥ अधिष्ठानेति ॥ प्रधानादिकं चेतनस्यानधिष्ठेयं प्रत्यक्षत्वादीश्वरवद्व्यतिरेकेण, मृदादिवच्चेत्यर्थः ॥ ३९ ॥

चक्षुरादौ व्यभिचारमाशङ्क्य निषेधति ॥ करणवदिति ॥ रूपमुद्भूतं नास्तीत्यप्रत्यक्षत्वं स्फुटयति ॥ रूपेति ॥ स्वभोगाहेतुत्वे सतीति

धानमीश्वरोऽधिष्ठास्यतीति, तथापि नोपपद्यते। भोगादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते, न चात्र भोगादयो दृश्यन्ते। करणग्रामसाम्ये चाभ्युपगम्यमाने संसारिणामिवेश्वरस्यापि भोगादयः प्रसज्येरन्। अन्यथा वा सूत्रद्वयं व्याख्यायते। 'अधिष्ठानानुपपत्तेश्च'। इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य। साधिष्ठानो हि लोके सशरीरो राजा राष्ट्रस्येश्वरो दृश्यते। न निरधिष्ठानः, अतश्च तद्दृष्टान्तवशेनादृष्टमीश्वरं कल्पयितुमिच्छत ईश्वरस्यापि कि-

विशेषणान्न व्यभिचार इत्याह॥ तथापीति॥ भोगः सुखदुःखानुभवः, आदिपदात् विषयानुभवग्रहः। न च यत् येनाधिष्ठेयं तत्तदीयभोगहेतुत्वे सति प्रत्यक्षमिति व्यतिरेकव्याप्तौ करणेषु व्यभिचारतादवस्थ्यमिति वाच्यं, भोगहेतुत्वविशिष्टाप्रत्यक्षत्वस्य हेतुत्वात्, करणेषु च विशेषणभावेनविशिष्टस्य हेतोरभावात्। न च विशेष्यवैयर्थ्यं परार्थपाचकाधिष्ठेयकाष्ठादौ व्यभिचारात्। न च प्रधानादेरीश्वरप्रत्यक्षत्वाद्विशेष्यासिद्धिः, अतीन्द्रियत्वरूपाप्रत्यक्षत्वस्य सत्त्वादित्यभिप्रायः। जीवे करणकृता भोगादयो दृश्यन्ते, ईश्वरे तु प्रधानकृतास्ते न दृश्यन्त इत्यक्षरार्थः। विपक्षे दोषं वदन् अप्रयोजकत्वं हेतोर्निरस्यति॥ करणेति॥ प्रधानादेः प्रेर्यत्वाङ्गीकारे प्रेरकभोगहेतुत्वं स्यादतीन्द्रियस्य प्रेर्यस्य भोगहेतुत्वनियमादित्यर्थः। सूत्रद्वयस्यार्थान्तरमाह॥ अन्यथा वेति॥ यः प्रवर्तकश्चेतनः स शरीरीति लोके व्याप्तिर्दृष्टा। ईश्वरस्य च शरीरानुपपत्तेर्न प्रवर्तकत्वमिति सूत्रार्थमाह॥ इतश्चेति॥ विमतं से-

श्चिच्छरीरं करणायतनं वर्णयितव्यं स्यात्, न च तद्वर्णयितुं शक्यते । सृष्ट्युत्तरकालभावित्वाच्छरीरस्य प्राक् सृष्टेस्तदनुपपत्तेः निरधिष्ठानत्वे चेश्वरस्य प्रवर्तकत्वानुपपत्तिः एवं लोके दृष्टत्वात्। 'करणवच्चेन्न भोगादिभ्यः' । अथ लोकदर्शनानुसारेणेश्वरस्यापि किञ्चित् करणानामायतनं शरीरं कामेन कल्प्येत, एवमपि नोपपद्यते। सशरीरत्वे हि सति संसारिवद्भोगादिप्रसङ्गादीश्वरस्याप्यनीश्वरत्वं प्रसज्येत ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य। स हि सर्वज्ञस्तैरभ्युपगम्यते अनन्तश्च, अनन्तं च प्रधानं अनन्ताश्च पुरुषा मिथो भिन्ना अभ्युप-

श्वरं कार्यत्वाद्राष्ट्रवदिति कल्पयतो राजवत् सशरीर एवेश्वरः स्यादित्युक्तं, तत्रेष्टापत्तिं निरस्यति ॥ न च तद्वर्णयितुमिति ॥ न च नित्यं शरीरं सर्गात् प्रागपि सम्भवतीति वाच्यं, शरीरस्य भौतिकत्वनियमादित्यर्थः । अतस्त्वशरीर एवेश्वरइत्यत आह ॥ निरधिष्ठानत्वे चेति॥ जीवस्यैव शरीरं भौतिकं ईश्वरस्य तु स्वेच्छानिर्मितं प्रागपि स्यादित्याशङ्कां निरस्यति ॥ करणवदिति ॥ करणान्यत्र सन्तीति करणवच्छरीरं, इच्छामयशरीरकल्पनैवानुपपन्ना मानाभावात् दृष्टभौतिकत्वनियमविरोधाच्चेति मन्तव्यम् ॥ ४० ॥

एवमीश्वरस्य शुष्कतर्केण कर्तृत्वनिर्णयो नेत्युपपाद्य नित्यत्वसर्वज्ञत्वनिर्णयोऽपि न सम्भवतीत्याह सूत्रकारः ॥ अन्तवत्त्वमिति ॥

गम्यन्ते। तत्र सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणामात्मनश्चेयत्ता परिच्छिद्येत, वा न वा परिच्छिद्येत, उभयथापि दोषोऽनुषक्त एव। कथं पूर्वस्मिंस्तावद्विकल्पे इयत्ता परिच्छिन्नत्वात् प्रधानपुरुषेश्वराणामन्तवत्त्वमवश्यम्भावि, एवं लोके दृष्टत्वात्। यद्धि लोके इयत्तापरिच्छिन्नं वस्तु घटादि तदन्तवद्दृष्टं, तथा प्रधानपुरुषेश्वरत्रयमपीयत्तापरिच्छिन्नत्वादन्तवत्स्यात्। सङ्ख्यापरिमाणं तावत् प्रधानपुरुषेश्वरत्रयरूपेण परिच्छिन्नं, स्वरूपपरिमाणमपि तद्गतमीश्वरेण परिच्छिद्येतेति। पुरुषगता च महासङ्ख्या, ततश्च इयत्तापरिच्छिन्नानां मध्ये ये संसारान्मुच्यन्ते

प्रधानपुरुषेश्वरत्रयमनित्यं इयत्तापरिच्छिन्नत्वात् घटवदित्याह ॥ पूर्वस्मिन्निति ॥ सङ्ख्या वा परिमाणं वेयत्ता। तथा च निश्चितसङ्ख्यत्वान्निश्चितपरिमाणत्वाच्चेति हेतुद्वयं। यद्यपि सङ्ख्यावत्त्वमात्रं हेतुः सम्भवति तथापि सर्वज्ञत्वनिश्चयेन हेत्वसिद्धिनिरासं द्योतयितुं निश्चितपदं, तत्राद्यहेतोरसिद्धिर्नास्तीत्याह॥ सङ्ख्यापरिमाणमिति ॥ सङ्ख्यास्वरूपमित्यर्थः। द्वितीयहेतुं साधयति॥ स्वरूपेति ॥ प्रधानादयो निश्चितपरिमाणाः वस्तुतोऽभिन्नत्वात् घटवदित्यर्थः। ननु प्रधानपुरुषेश्वरास्त्रय इति ज्ञातेऽपि जीवानामानन्त्यात् कथं सङ्ख्यानिश्चयस्तत्राह॥ पुरुषेति ॥ जीवसङ्ख्यापीश्वरेण निश्चीयेत अनिश्चये सर्वज्ञत्वायोगादित्यर्थः। हेतुसिद्धेः फलमाह॥ ततश्चेति ॥ माषराशिवत् केषाञ्चिज्जीवानां सङ्स्तद्बन्धश्चनश्येदित्येवं सर्वमुक्तेरिदानीं शून्यं जगत् स्यादित्य-

तेषां संसारोऽन्तवान् संसारित्वं च तेषामन्तवत्, एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां चान्तवत्त्वं स्यात्। प्रधानं च सविकारं पुरुषार्थमीश्वरस्याधिष्ठेयं संसारवत्त्वेनाभिमतं तच्छून्यतायामीश्वरः किमधितिष्ठेत्, किंविषये वा सर्वज्ञतेश्वरते स्यातां। प्रधानपुरुषेश्वराणां चैवमन्तवत्त्वे सत्यादिमत्त्वप्रसङ्गः, आद्यन्तवत्त्वे च शून्यवादप्रसङ्गः। अथ मा भूदेष दोष इत्युत्तरो विकल्पोऽभ्युपगम्येत न प्रधानस्य पुरुषाणामात्मनश्चेयत्तेश्वरेण परिच्छिद्यत इति। तत ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिरपरो दोषः प्रसज्येत, तस्मादप्यसङ्गतस्तार्किकपरिगृहीत ईश्वरकारणवादः॥ ४१॥

## उत्पत्त्यसम्भवात्॥ ४२॥

येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारण-

र्थः। नित्यस्यानवशेषादिति भावः। ननु ईश्वरः शिष्यतामिति चेन्न तस्यापि भिन्नत्वेनान्तवत्त्वात्। किञ्चेशितव्याभावादीश्वराभावः स्यादित्याह॥ प्रधानमिति॥ दोषान्तरमाह॥ प्रधानेति॥ इयत्तानिश्चयाभावान्न शून्यतेति द्वितीयं शङ्कते॥ अथेति॥ इयता नास्ति न निश्चीयते चेत्यर्थः। प्रधानादयः सङ्ख्यापरिमाणवन्तः द्रव्यत्वान्माषादिवदित्यनुमानादस्तीयत्ता, तदज्ञाने स्यादसर्वज्ञता, इयत्तायां चान्तवत्त्वमप्यक्षतमिति परिहरति॥ तत इति॥ तस्मात् केवलकर्त्रीश्वरवादस्य निर्मूलत्वान्न कर्त्रुपादानाद्वयेश्वरसमन्वयविरोध इति सिद्धम्॥ ४१॥

मीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यातः, येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते। ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राक् निर्धारितः प्रकृतिश्चाधिष्ठाता चेति, श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः, तत् कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति। उच्यते। यद्यप्येवंजातीयकोंऽशः समानत्वान्न विसंवादगोचरो भवत्यस्ति त्वंशान्तरं विसंवादस्थानमिति, अतस्तत्प्रत्याख्यानायारम्भः। तत्र भागवता मन्यन्ते 'भगवानेवैको वासुदेवः निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वं, स चतुर्धाऽऽत्मानं प्रविभज्य प्रतिष्ठितो 'वासुदेवव्यूहरूपेण 'सङ्कर्षणव्यूहरूपेण 'प्रद्युम्नव्यूहरूपेण 'अनिरुद्धव्यूहरूपेण च। वा-

पञ्चपदार्थवादिमाहेश्वरमतनिरासानन्तरं चतुर्व्यूहवादं बुद्धिस्थं निरस्यति ॥ उत्पत्त्यसम्भवात् ॥ अधिकरणतात्पर्यमाह ॥ येषामिति ॥ अधिकरणारम्भमाक्षिपति ॥ नन्विति ॥ वेदाविरुद्धांशमङ्गीकृत्य वेदविरुद्धं जीवोत्पत्त्याद्यंशं निराकर्तुमधिकरणारम्भ इत्याह ॥ उच्यत इति ॥ अत्र भागवतपञ्चरात्रागमो विषयः स किं जीवोत्पत्त्याद्यंशे मानं नवेति संदेहे बाधानुपलम्भान्मानमिति पूर्वपक्षयति ॥ तत्रेति ॥ पूर्वपक्षे तदागमविरोधाज्जीवाभिन्नब्रह्मसमन्वयासिद्धिः, सिद्धान्ते तदंशे तस्याऽमानत्वादविरोधात्तत्सिद्धिरिति फलभेदः। सावयवत्वं निरस्यति ॥ निरञ्जनेति ॥ कथं तर्ह्यद्वितीये वासुदेवे मूर्त्तिभेदस्तत्राह ॥ स इति ॥ व्यू-

सुदेवो नाम परमात्मोच्यते, सङ्कर्षणो नाम जीवः, प्रद्युम्नो नाम मनः, अनिरुद्धो नामाहङ्कारः, तेषां वासुदेवः परा प्रकृतिः इतरे सङ्कर्षणादयः कार्यं, तमित्थम्भूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति। तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्वात्मा स आत्मनाऽऽत्मानमनेकधा व्यूह्यावस्थित इति, तन्न निराक्रियते, 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधा भवस्याधिगतत्वात्,। यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनं अजस्रमनन्यचित्ततयाऽभिप्रेयते तदपि न प्रतिषिध्यते श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात्। यत् पुनरिदमुच्यते वासुदेवात् सङ्कर्षण उ-

हो मूर्त्तिः। सविशेषं शास्त्रार्थमुक्त्वा सहेतुं पुरुषार्थमाह॥ तमित्थम्भूतमिति॥ यथोक्तव्यूहवन्तं सर्वप्रकृतिं निरञ्जनं विज्ञानरूपं परमात्मानमिति यावत्। वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनमभिगमनं, पूजाद्रव्याणामर्जनमुपादानं, इज्या पूजा, स्वाध्यायोऽष्टाक्षरादिजपः, योगो ध्यानं। तत्राविरुद्धांशमुपादत्ते॥ तत्रेति॥ समाहितः 'श्रद्धावित्तो भूत्वेति' 'तं यथा यथोपासते' इत्याद्या च श्रुतिः। मत्कर्मकृन्मत्परमः' इत्याद्या स्मृतिः। विरुद्धांशमनूद्य दूषयति॥ यत्

त्पद्यते सङ्कर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्ध इति । अत्र ब्रूमः, न वासुदेवसंज्ञकात् परमात्मनः सङ्कर्षणसंज्ञस्य जीवस्योत्पत्तिः सम्भवति, अनित्यत्वादिदोषप्रसङ्गात्। उत्पत्तिमत्त्वे हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन्, ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात्,कारणाप्राप्तौ कार्यस्य प्रविलयप्रसङ्गात्। प्रतिषेधिष्यति चाचार्यो जीवस्योत्पत्तिं 'नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः' (अ० २।पा० ३।सू० १७)इति । तस्मादसङ्गतैषा कल्पना ॥ ४२ ॥

## न च कर्तुः करणम् ॥ ४३ ॥

इतश्चासङ्गतैषा कल्पना, यस्मान्न हि लोके कर्तुर्देवदत्तादेः करणं परश्वाद्युत्पद्यमानं दृश्यते। वर्णयन्ति च भागवताः कर्तुर्जीवात् सङ्कर्षणसंज्ञकात् करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यते कर्तृजाच्च तस्मादनिरुद्धसंज्ञकोऽहङ्कार उत्पद्यते, इ-

पुनरिति ॥ कृतहान्यादिदोष आदिशब्दार्थः । न्यायोपेतया 'अज आत्मा' इत्यादिश्रुत्या पञ्चरात्रागमस्योत्पत्त्यंशे मानत्वाभावनिश्चया-ज्जीवाभिन्नब्रह्मसमन्वयस्थैर्यमिति भावः ॥ ४२ ॥

जीवस्योत्पत्तिं निरस्य जीवान्मनस उत्पत्तिं निरस्यति ॥ न च कर्तुरिति ॥ यस्मात् कर्तुः करणोत्पत्तिर्न दृश्यते तस्मादसङ्गता कल्पनेत्यन्वयः । सिद्धानां करणानां प्रयोक्ता कर्तेति प्रसिद्ध्यर्थो हिशब्दः । वर्णनं

ति। न चैतद्दृष्टान्तमन्तरेणाध्यवसातुं शक्नुमः न चैवम्भूतां श्रुतिमुपलभामहे ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

अथापि स्यान्न चैते सङ्कर्षणादयो जीवादिभावेनाभिप्रेयन्ते किं तर्हि ईश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वर्यधर्मैरन्विता अभ्युपगम्यन्ते वासुदेवा एवैते सर्वे निर्दोषा निरधिष्ठाना निरवद्याश्चेति, तस्मान्नायं यथावर्णित उत्पत्त्यसम्भवो दोषः प्राप्नोतीति। अत्रोच्यते, एवमपि तदप्रतिषेध उत्पत्त्यसम्भवस्याप्रतिषेधः प्राप्नोत्येव, अयमुत्पत्त्यसम्भवो दोषः प्रका-

निर्मूलमित्याह ॥ न चेति ॥ ननु लोके कश्चिच्छिल्पिवरः कुठारं निर्माय तेन वृक्षं छिनत्तीति दृष्टमिति चेत्सत्यं, शिल्पिनो हस्तादिकरणान्तरसत्त्वात् कुठारकर्तृत्वं युक्तं, जीवस्य तु करणान्तरासत्त्वान्न मनसः कर्तृत्वं विनैव करणं कर्तृत्वे वा मनोवैयर्थ्यमिति भावः ॥ ४३ ॥

सङ्कर्षणादीनामुत्पत्त्यसम्भवेऽपि व्यूहचतुष्टयं स्यादिति सूत्रव्यावर्त्यमाशङ्कते ॥ अथापि स्यादिति ॥ ज्ञानैश्वर्ययोः शक्तिरान्तरं सामर्थ्यं बलं शरीरसामर्थ्यं वीर्यं शौर्यं तेजः प्रागल्भ्यं एतैरन्विता यस्मात् सङ्कर्षणादयः तस्मादीश्वरा एवेत्यर्थः। सर्वेषामीश्वरत्वे पञ्चरात्रोक्तिमाह ॥ वासुदेवा एवेति ॥ निर्दोषा रागादिशून्या निरधिष्ठानाः प्रकृत्यजन्या निरवद्या नाशादिरहिता इत्यर्थः। ईश्वरत्वाज्जन्मासम्भवो गुण एवेत्याह ॥ तस्मादिति ॥ सूत्रेण सिद्धान्तयति ॥ अत्रेति ॥ एवमपि चतुर्णामीश्वरत्वेन विज्ञानशक्त्यादिभावेऽपीत्यर्थः। प्रकारान्तरं पृ-

रान्तरेणेत्यभिप्रायः, कथं यदि तावदयमभि-प्रायः परस्परभिन्ना एवैते वासुदेवादयश्चत्वार ईश्वरास्तुल्यधर्माणो नैषामेकात्मकत्वमस्तीति, ततोऽनेकेश्वरकल्पनानर्थक्यं, एकेनैवेश्वरेणेश्वर-कार्यसिद्धेः। सिद्धान्तहानिश्च भगवानेको वा-सुदेवः परमार्थतत्त्वमित्यभ्युपगमात्। अथाय-मभिप्रायः एकस्यैव भगवत एते चत्वारो व्यूहा-स्तुल्यधर्माण इति, तथापि तदवस्थ एवोत्पत्त्य-सम्भवः। न हि वासुदेवात् सङ्कर्षणस्योत्पत्तिः सम्भवति सङ्कर्षणाच्च प्रद्युम्नस्य, प्रद्युम्नाच्चा-निरुद्धस्य, अतिशयाभावात्। भवितव्यं हि का-र्यकारणयोरतिशयेन यथा मृद्घटयोः। न ह्यस-त्यतिशये कार्यं कारणमित्यवकल्पते। न च पञ्च-रात्रसिद्धान्तिभिर्वासुदेवादिषु एकैकस्मिन् सर्वे-षु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्यु-पगम्यते, वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते। न चैते भगवद्व्यूहाश्चतुःसङ्ख्याया-

च्छति॥ कथमिति॥ किं चत्वारः स्वतन्त्रा भिन्ना एव उतैकस्य वि-कारत्वेनाभिन्नाः आद्यमनूद्य दूषयति॥ यदीत्यादिना॥ द्वितीये वि-काराः प्रकृतितुल्या वा न्यूना वा आद्यमुत्थाप्य निषेधति॥ अथेत्या-दिना॥ न्यूनत्वपक्षेऽपसिद्धान्तमाह॥ न च पञ्चेति॥ यदि न्यूना अपि भगवतो व्यूहास्तदा चतुष्ट्वव्याघात इत्याह॥ न चैत इति॥४४॥

मेवावतिष्ठेरन्, ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात् ॥ ४४ ॥

## विप्रतिषेधाच्च ॥ ४५ ॥

विप्रतिषेधश्चास्मिन् शास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणः । ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणाः, आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात् । वेदविप्रतिषेधश्च भवति, चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रं अधिगतवान् इत्यादिवेदनिन्दादर्शनात्, तस्मादसङ्गतैषा कल्पनेति सिद्धम् ॥ ४५ ॥

इति श्रीशारीरकमीमांसाभाष्ये शङ्करभगवत्पादकृतौ द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

इतश्च जीवोत्पत्तिवाद उपेक्ष्य इत्याह सूत्रकारः ॥ विप्रतिषेधाच्चेति ॥ स्वस्यैव गुणत्वं गुणित्वं च विरुद्धं आदिपदात् प्रद्युम्नानिरुद्धौ भिन्नावात्मन इत्युक्त्वात्मन एवैते इति विरुद्धोक्तिग्रहः । पूर्वापरविरोधादसाङ्गत्यमिति सूत्रार्थमुक्त्वार्थान्तरमाह ॥ वेदेति ॥ एकस्यापि तन्त्राक्षरस्याध्येता चतुर्वेदिभ्योऽधिक इति निन्दाऽऽदिपदार्थः, तस्मान्मिथो विरुद्धाभिः पौरुषेयकल्पनाभिर्नापौरुषेयवेदान्तसमन्वयविरोध इति सिद्धम् ॥ ४५ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

# ॐ परमात्मने नमः ॥

## न वियदश्रुतेः ॥ १ ॥

वेदान्तेषु तत्रतत्र भिन्नप्रस्थाना उत्पत्तिश्रुतयं उपलभ्यन्ते । केचिदाकाशस्योत्पत्तिमामनन्ति केचिन्न । तथा केचिद्वायोरुत्पत्तिमामनन्ति केचिन्न । एवं जीवस्य प्राणानां च । एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः श्रुत्यन्तरेषु लक्ष्यते । विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितं तद्वत् स्वपक्षस्यापि विप्रतिषेधादेवानपेक्षितत्वमाशङ्क्येतेत्यतः सर्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते । तदर्थनिर्मलत्वे च फलं यथोक्ताशङ्कानिरासेव, तत्र प्रथमं तावदाकाशमाश्रित्य चिन्त्यते किमस्याकाश-

ॐ ब्रह्मणे नमः ।

वियदादिविधातारं सीतास्याब्जमधुव्रतम् ।
नित्यचिद्विश्वकर्त्रात्माभिन्नं सर्वेश्वरं भजे ॥ १ ॥

जीवस्यानुत्पत्तिप्रसङ्गेनाकाशस्याप्युत्पत्त्यसम्भवमाशङ्क्य परिहरन्नादावेकदेशिमतमाह ॥ न वियदश्रुतेः ॥ वियत्प्राणपादयोरर्थं सङ्क्षिपन् पूर्वपादेन सङ्गतिमाह ॥ वेदान्तेष्विति ॥ भिन्नोपक्रमत्वमेवाह ॥ केचिदित्यादिना ॥ भूतभोक्तृश्रुतीनां मिथोविरोधशङ्कानिरासो वियत्पादार्थः । लिङ्गशरीरश्रुतीनां तन्निरासः प्राणपादार्थः । यथा मिथो-

१ अर्थशब्दोत्र प्रयोजनवाची ।

स्योत्पत्तिरस्त्युत नास्तीति। तत्र तावत् प्रतिपाद्यते। न वियदश्रुतेरिति। न खल्वाकाशमुत्पद्यते। कस्मात् अश्रुतेः, न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति। छान्दोग्ये हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य 'तदैक्षत तत्तेजोऽसृजत' इति च पञ्चानां महाभूतानां मध्यमं तेज आदि कृत्वा त्रयाणां तेजोऽबन्नानामुत्पत्तिः श्राव्यते। श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ न चात्र श्रुतिरस्त्याकाशस्योत्पत्तिप्रतिपादिनी तस्मान्नाकाशस्योत्पत्तिरिति ॥ १ ॥

विरोधात् पूर्वापरविरोधाच्च परपक्षा उपेक्ष्याः तथा श्रुतिपक्षोऽपि उपेक्ष्य इति शङ्कोत्थाने पादद्वयस्यारम्भात् पूर्वपादेन दृष्टान्तसङ्गतिरिति समुदायार्थः। आकाशवाय्वोरुत्पत्तिमामनन्ति तैत्तिरीयकाः, नामनन्ति च्छन्दोगाः, जीवस्य प्राणानाञ्चोत्पत्तिं सर्व एत आत्मनो व्युच्चरन्तीति वाजिनः, एतस्माज्जायते प्राण इत्याथर्वणिकाश्चामनन्ति। नन्वेवमाकाशपूर्विका क्वचित् सृष्टिः क्वचित्तेजःपूर्विकेतिक्रमविरोधः। आदिपदात् 'स इमाँल्लोकानसृजतेत्यक्रमः' क्वचित् सप्तप्राणाः क्वचिदष्टावित्यादिसङ्ख्याद्वारकश्च विरोधो ग्राह्यः, प्रपञ्चः पादद्वयं, तथा च पादद्वयस्य श्रुतीनां मिथोविरोधनिरासार्थत्वाच्छ्रुतिशास्त्राध्यायसङ्गतयः सिद्धाः। अत्राकाशस्योत्पत्त्यनुत्पत्तिश्रुत्योर्मिथोविरोधोऽस्ति न वेति वाक्यभेदैकवाक्यत्वाभ्यां सन्देहे यद्युत्पत्तिस्तदावाक्यभेदेन विरोधादप्रामाण्यं अनयोः श्रुत्योरिति पूर्वपक्षयिष्यन् आदावनुत्पत्तिपक्षमेकदेशी गृह्णातीत्याह ॥ तत्र तावदिति ॥ १ ॥

